एष मे परमोदार वरः परमको मतः ।
न हि धर्माभिरक्तानां लोके किंचन दुर्लभम् ॥ २८
अथ प्रजापतिः प्रीतो विभीषणमुवाच ह ।
धर्मिष्ठस्त्वं यथा वत्स तथा चैतद्भविष्यति ॥ २९
यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्षण ।
नाधर्मे जायते बुद्धिरमरत्वं ददामि ते ॥ ३०
कुम्भकर्णाय तु वरं प्रयच्छन्तमरिंदम ।
प्रजापतिं सुराः सर्वे वाक्यं प्राञ्जलयोऽब्रुवन् ॥ ३१
न तावत्कुम्भकर्णाय प्रदातव्यो वरस्त्वया ।
जानीषे हि यथा लोकांस्त्रासयत्येष दुर्मतिः ॥ ३२
नन्दनेऽप्सरसः सप्त महेन्द्रानुचरा दश ।
अनेन भक्षिता ब्रह्मन्नृषयो मानुषास्तथा ॥ ३३
वरव्याजेन मोहोऽस्मै दीयताममितप्रभ ।
लोकानां स्वस्ति चैव स्याद्भवेदस्य च संततिः ॥ ३४

G. 7. 10. 39
B. 7. 10. 40
L. 7. 9. 32

(corrupt); T3.4 भजे तदा (for च पालये). Ś2.3 D8.12 तं नाधर्मं भजेत वा; Ñ1 तदर्थं भजतेति च (sic); V1 ततो धर्मो भवेत्ततः; D9 तत्तद्धर्मं भजेति च. ❀ Cg: पालये पालयेयम्. ❀

**28** $^{a}$) Ś V1 D8.12 एवं (for एष). Ś Ñ2 V2.3 B D2.8.9.12 T3 M6 G(ed.) परमोदारो (B2 °मः कामः; G[ed.] °मो देव). —$^{b}$) V3 G1 मम (for मतः). V1 वरः सर्वगुणाधिकः; B2 सर्वदा हृदि वर्तते. —$^{c}$) Ñ B T1.2 G3 M1.3 -[अ]नु- (for -[अ]भि-). D3.4 -सक्तानां (for -रक्तानां). —$^{d}$) T1.2 G M8 किंचित्सु- (G1 °त्प्र-; G2 °न्न) (for किंचन). Ś Ñ V B D1–4.8.9.12 T3.4 किंचिल्लोकेस्ति (D1.4 °स्तु) दुर्लभं.

**29** $^{a}$) Ñ1 D6.7.10.11 T1.2 G M1–5.7–10 पुनः; V1 ततः (for अथ). B2 वाक्यं (for प्रीतो). —$^{b}$) Ñ B1.3.4 वाक्यमेतद् (for विभीषणम्). G2 हा (for ह). —$^{c}$) Ñ V1.2 B2 D2.5.7.9–11 T3.4 G M3.6 Cv धर्मिष्ठ (for °ष्ठस्). Ś B4 D2.3.8.9.12 T3 सदा; D1.4 यदा (for यथा). B3 यथा (sic) (for वत्स). V3 धर्मिष्ठं चैव धर्मज्ञ. —B3 om. from $29^{d}$ up to the prior half of l. 2 of 168*. —$^{d}$) G1 वा (for च). M5 [ए]वं (for [ए]तद्). Ñ1 यथैतत्ते; Ñ2 तथैतत्तद्; V1 तदा चैवं; V2 B1.2.4 तथैवं ते (V2 तद्); D1.3.4 तदा वै (D3 चै) तद्; D5 G2 M9 तथैवैतद्; T3 तथा वत्स (for तथा चैतद्).

**30** B3 om. 30 (cf. v.l. 29). —$^{a}$) Ś V3 D2.8 तस्माद्; D1.3.4 T1.2 G M1–5.7–9 यस्य (for यस्माद्). T2 G3 तु (for ते). —$^{b}$) D1.3.4 T1.2 G M1–5.7–9 [अ]मित्रकर्शन; D6.7.10.11 M6.10 [अ]मित्रनाशन (for °कर्षण). Ś V1.3 D2.5.8.9.12 T3.4 जातस्य हि (V3 D5 T3.4 °स्यापि) निशाचर. —$^{c}$) Ś V1.3 D2.5.8.9.12 T3.4 रमते; Ñ V2 B1.2.4 वर्तते; Ck.t as in text (for जायते). D1.3.4 धर्मे बुद्धिः परमिका (with hiatus). —$^{d}$) B1 ददानि. —After 30, Ñ V2.3 (repeats here; cf. v.l. 20) B D3 (only l. 1) ins.:

168* एष एव च ते कामो भविष्यति निशाचर ।
अशिक्षितं च ब्रह्मास्त्रं यथावत्प्रतिपत्स्यसे ।

[B3 om. up to the prior half of l. 2. —(l. 1) B1 एवम् (for एष). V2 तु; B2 D3 हि (for च). Ñ1 V3 (first time) न संशयः (for निशाचर). Ñ2 नित्यं वत्स भविष्यति (for the post. half). —(l. 2) B3 त्वं चापि (for यथावत्). Ñ2 B3.4 प्रतिपत्स्यते; V2 B2 प्रतिपद्यसे; V3 (first time) °भास्यते; V3 (second time) °भातु ते (for प्रतिपत्स्यसे).]

**31** $^{ab}$) B3 च (for तु). Ś2.3 D12 प्रायच्छंतम्; Ñ V B दातुकामम्; D1.3.4 प्रदेयं तु (D3 नु) (with hiatus) (for प्रयच्छन्तम्). G1 M5.6 अरिंदमं. D6.7.10.11 G2 M10 इत्युक्त्वा कुंभकर्णाय वरं दातुम (G2 °तुं व्य) व (M10 °मुप)स्थितं. —After $31^{ab}$, D1.3.4 ins.:

169* एतस्मिन्नन्तरे राम देवाः सर्षिपुरोगमाः ।

—$^{c}$) G2 वरदं तु; M1 पितामहं (for प्रजापतिं). M4 प्रजाः (for सुराः). D1.3.4 अथागम्य (for सुराः सर्वे).

**32** $^{ab}$) Ś V3 B3 D1.4.8.9.12 T3 देव; D2 चैव; T1.2 M1.3 तात (for तावत्). T4 भगवन् (for न तावत्). T4 न (for प्र-). B3 दातव्योद्य; G1 दातव्यो हि (for प्रदातव्यो). V1 कुंभकर्णाय चरते दातव्यो यस्त्वया वरः. —$^{c}$) Ś Ñ V B1.3.4 D2.8.9.12 T3.4 जानासि; T2 जानीते; Ck.t as in text (for जानीषे). B4 [इ]ह (for हि). —$^{d}$) V1 B1.2.4 D7 ताप (V1 D7 नाश) यति (for त्रास°). B4 [ए]व (for [ए]ष). Ñ V1.3 D5 T3.4 राक्षसः; Ck.t as in text (for दुर्मतिः). Ś D2.8.9.12 त्रासयिष्यति राक्षसः; V2 त्रासयामास राक्षसः.

**33** $^{a}$) Ś D2.8.9.12 T3.4 सर्वा; D1.3.4 तत्र (for सप्त). —T4 damaged from च in $33^{b}$ up to न्नृ in $33^{d}$. —$^{c}$) G2 अनेका (for अनेन). —$^{d}$) Ñ1 V1.2 B2 T1.2 M1–3.8.9 मानवास्; Ñ2 ब्राह्मणास् (for मानुषास्). —After 33, D7.10.11 T3.4 M3 ins.:

170* अलब्धवरपूर्वेण यत्कृतं राक्षसेन तु ।
यद्येष वरलब्धः स्याद्भक्षयेद्भुवनत्रयम् ।

[(l. 1) D10.11 -पूर्णेन; Cg as above (for -पूर्वेण). M3 कृतमेवं तु रक्षसा (for the post. half). —(l. 2) K (ed.) तद् (for यदि). M3 स्याल्लब्धवरः (by transp.). T4 नाशितं (for भक्षयेद्).]

**34** T3 reads $34^{ab}$ twice. V3 illeg. for $34^{a}$. —$^{a}$) T1.2 G2.3 M3 तु; T3 (second time) M4.7.8.9 [ऽ]सौ;

G. 7. 10. 40
B. 7. 10. 40
L. 7. 9. 33

एवमुक्तः सुरैर्ब्रह्माचिन्तयत्पद्मसंभवः ।
चिन्तिता चोपतस्थेऽस्य पार्श्वं देवी सरस्वती ॥ ३५
प्राञ्जलिः सा तु पार्श्वस्था प्राह वाक्यं सरस्वती ।
इयमस्म्यागता देव किं कार्यं करवाण्यहम् ॥ ३६
प्रजापतिस्तु तां प्राप्तां प्राह वाक्यं सरस्वतीम् ।
वाणि त्वं राक्षसेन्द्रस्य भव या देवतेप्सिता ॥ ३७
तथेत्युक्त्वा प्रविष्टा सा प्रजापतिरथाब्रवीत् ।
कुम्भकर्ण महाबाहो वरं वरय यो मतः ॥ ३८
कुम्भकर्णस्तु तद्वाक्यं श्रुत्वा वचनमब्रवीत् ।
स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम् ॥ ३९

---

G1 M5 [ऽ]यं; M1.2.10 वै (for ऽस्मै). Ś Ñ V1.2 B1.4 D1–4.8.9.12 T3(first time).4 M6 तच्छापो वरनामास्मै (V1 °दानोस्मै; B1 °सौ); B2.3 एतज्ज्ञात्वा(B3 ततः सुप्तं) वरश्चास्मै.—b) Ś V3 D1–5.8.9.12 अमरप्रभो; Ñ1 B3 अमितप्रभो(B3 °भुः); T(T3 second time) G1 M (except M6) अस्य रक्षसः (for अमितप्रभ).—c) Ñ V2 B D1.3.4 M6 लोकेभ्यः(Ñ2 °के वै); Ck.t as in text (for लोकानां). Ñ V B D1–4.9–11 T3.4 M3.8 Ck.t [ए]वं (for [ए]व).—D1 om. from स्याद् in $34^{c}$ up to $36^{c}$. M6 [अ]स्तु; Ck.t as in text (for स्याद्).—d) Ś1 D8 M4 अस्ति (sic); B1 G3 तस्य (for अस्य). V3 T2 [अ]पि; D5 [इ]व; T1 G3 M5.10 न (for च). Ñ2 V3 B1–3 D10.11 T3 M5 Ck.t संमतिः; V2 D6 T1 सन्मतिः; G2 संततिः(sic); T2 [अ]सन्मतिः; Cg as in text (for संततिः). D5 भवेद्स्येव संततिं (sic).

35 D1 om. 35 (cf. v.l. 34).—b) D2.8.12 M6 चिंतयन्. V3 D2 पद्मसंनिभः. M4.5 चिंतयामास चाब्जजः.—After $35^{ab}$, Ś Ñ V B D2–5.8.9.12 M3 ins.; while T3.4 ins. l. 1 after $35^{ab}$ and ins. l. 2 after $37^{ab}$:

171* देवीं सरस्वतीं चैव पद्माक्षीं पद्ममालिनीम् ।
त्रैलोक्ये सर्वभूतानां जिह्वा बुद्धिर्धृतिः स्मृतिः ।

[(l. 1) Ñ1 V1.2 B3.4 D3.5 देव; Ñ2 B2 M3 देवः (for चैव).—D4 om. from the post. half up to $36^{c}$. Ñ2 V2 B1.2.4 पद्मसंभवां(B1 °वः) (for पद्ममालिनीम्).—(l. 2) B1 त्रिलोके. Ñ2 V2 B सर्वभूतेषु (for °तानां). B3 प्रज्ञा (for जिह्वा).];
while G2 M10 ins. after $35^{ab}$:

172* सरस्वतीं गिरां देवीं सोपतस्थे प्रजापतिः ।

—c) Ś1 D2.8.12 सा (for च). V1 B1 चिंतितेन. Ś V1 D2.5.6.8 T3.4 M1.3.5 सा (Ś1 D2.8.12 sic); T1.2 G2.3 M2.9 च; M4.7 तु (for ऽस्य). D8 चोपतिष्ठेच्च; G1 चोपतस्थौ तु (for चोपतस्थेऽस्य).—d) Ś Ñ V1.3 B D2.8.9.12 T3.4 पार्श्वे(Ñ1 V1 B2 °र्श्वं) हृष्टा; D5.6 G2 M6.8 पार्श्वे देवी(D5 त्वष्टुः) (for पार्श्वं देवी).

36 D1.4 om. $36^{abc}$ (cf. v.l. 34 and 171* respy.). Ś2.3 Ñ1 B2 D3.9 M8 om. (hapl.) $36^{ab}$.—a) L (ed.) सांजलिः. Ś1 D8 M7 प्राह (sic); M1.3 चास्य (for सा तु). D6 T3.4 पद्मस्था (for पार्श्वस्था).—b) Ś1 Ñ2 V1.3 B1.3.4 D2.5.8.12 T3.4 M7 देवी (for वाक्यं). T1.2 G3 M8 वाक्यं प्राह (by transp.). T3.4 पितामहं; G2 M4.5 शनैरिव (for सरस्वती).—c) D5 G1 अहम् (for इयम्). D5 G2 अभ्यागता.—d) Ñ2 V2.3 B ते (for [अ]हम्).

37 ab) Ś V3 B D1–4.8.9.12 M6 सं- (for तां). Ñ2 प्राह (for प्राप्तां). G1 transp. प्राप्तां and प्राह. Ś1 D8 महादेवीं; Ś2.3 Ñ1 V B D1–5.9.12 T3.4 प्राह (Ś2.3 D12 आह) देवीं; Ñ2 देवीं चैव; M3 वाक्यं प्राह (by transp.) (for प्राह वाक्यं). M6.7 शुभाक्षरं (for सरस्वतीम्).—After $37^{ab}$, T3.4 ins. l. 2 of 171*.—c) Ś B4 D1–4.8.9 वाणी (for वाणि). Ñ2 V2 B D1.3.4 M6.7 राक्षसस्यास्य(D1.4 M6 °स्ये); M10 कुंभकर्णस्य; K(ed.) राक्षसेंद्रास्ये (for °सेन्द्रस्य).—d) Ñ1 B2 D6.7.10.11 T1.2 M3.5 Ck.t भव वाग्(D6 सा); V2.3 B3.4 D1.4 भवेथा; M8 जिह्वायां; Cv.g as in text (for भव या). Ś D8 सिता; Cv.g.k.t as in text (for [ई]प्सिता). D3.9 M2.4.7–9 दैवतेप्सिता. D12 भव देवहिते रता. ❀ Cv: "वाणि त्वं राक्षसेन्द्रस्य भव या दैवतेप्सितेति" यादृशव्यवहारा दैवतैरीप्सिता राक्षसेन्द्रस्य तादृशव्यवहारा त्वं भव ।; Cg: भव या देवतेप्सिता यादृग्रूपा दैवतैः काङ्क्षिता तादृशी भवेत्यर्थः ।; Ct: अस्यास्ये देवतेप्सिता देवानामिष्टा वाग्भव. ❀ —After 37, Ñ V2.3 B ins.:

173* इत्युक्ता सा प्रणम्याथ तं विवेश निशाचरम् ।

[B3 तथा (for इति). V2.3 B2 [उ]क्त्वा सा; B3 [इ]त्युक्त्वा (for [उ]क्ता सा). V2 प्र- (for तं).]

38 ab) T3.4 [उ]क्त्वा. D1.4 [आ]स्यं (for सा). V3 एवं राघव तद्रक्षो (for a). Ñ V2 B ततो राघव तद्रक्षो ब्रह्मा वचनमब्रवीत्.—Ś2.3 om. (hapl.) $38^{cd}$.—d) Ś1 Ñ V B1.2.4 D2.5.8.9.12 T3.4 राक्षस; B3 D1.4 सुव्रत (for यो मतः).

39 a) T1.2 G3 M3 स (for तु). Ś V1.3 D2.5.8.9.12 T3.4 तु तच्छ्रुत्वा; Ñ V2 B ततो हृष्टः (for तु तद्वाक्यं).—b) Ś Ñ V B D1–5.8.9.12 T3.4 M6 वाक्यं(Ñ V2 B D1.3.4 M6 श्रुत्वा; V1 हृष्टो) वाक्यमुवाच ह.—After $39^{ab}$, D1.4 ins.:

174* अशामि किल लोकेश शयामि वरमावृणोत् ।
ततस्तं मन्दप्रज्ञानं विधात्रा मोहितं तदा ।

—c) D1.4 सुप्तं. Ś Ñ V B D2.3.5.8.9.12 T4 M6 स्वप्तुं (Ś2 °यं) युग(Ś2 पुरा; Ñ V2 B1.2.4 T4 M6 वर्ष)सहस्राणि.—d) D1.4 वरं देहि (for देवदेव). Ś D2.8.9.12 मया (for मम).—After 39, Ś Ñ V B1–3 D2.3.5.8.9.12 T3.4 ins. 1

एवमस्त्विति तं चोक्त्वा सह देवैः पितामहः ।
देवी सरस्वती चैव मुक्त्वा तं प्रययौ दिवम् ॥ ४०
कुम्भकर्णस्तु दुष्टात्मा चिन्तयामास दुःखितः ।
कीदृशं किं न्विदं वाक्यं ममाद्य वदनाच्च्युतम् ॥ ४१
एवं लब्धवराः सर्वे भ्रातरो दीप्ततेजसः ।
श्लेष्मातकवनं गत्वा तत्र ते न्यवसन्सुखम् ॥ ४२

G. 7. 10. 52
B. 7. 10. 49
L. 7. 9. 41

इति श्रीरामायणे उत्तरकाण्डे दशमः सर्गः ॥ १० ॥

---

175* षण्मासान्हि स्वपे देव दिनमेकं तु भोजनम् ।

[ B3 च (for हि). D5 षट्मासं तु (for षण्मासान्हि). Ś1 D8 हि स्वयं (corrupt) (for हि स्वपे). Ñ2 V2.3 B1.2 G (ed.) षण्मासां(G [ed.]°सों [sic])ते भवेद्देव (for the prior half). Ś2.3 Ñ2 V2 B1.3 D12 T3 च; D5 हि (for तु). V1 रोधनं (for भोजनम्). ]

40 ᵃ) Ś V3 D2.5.8.9.12 चैवोक्तेः; Ñ2 V1 T3.4 M3 तं प्राह(Ñ2 प्रोक्त्वा); V2 B3 चोक्त्वा तं (by transp.); B1.2.4 चोक्त्वा स; G1 तेनोक्तः; M7 संहृष्टाः (for तं चोक्त्वा). —ᵇ) Ś V3 D2.8.9.12 T1.2 G2.3 M1.7.8 प्रहृष्टास्ते(Ś1 D2.8.9.12 °स्तु) दिवौकसः; V1 T3.4 M3 ततो(V1 देव) हृष्टा दिवौकसः; D1.3.4 ब्रह्मा लोकपितामहः; D5 प्रहृष्टा त्रिदिवौकसः; D6.7.10.11 M2.5.9.10 प्रायाद्ब्र(M10 ययौ ब्र)ह्मा सुरैः समं (M2.5.9 °ह); G1 M4.6 प्रन(G1 °वि)ष्टास्ते दिवौकसः; L (ed.) प्रहृष्टास्ते वनौकसः. —ᶜ) B1 [अ]थ; G (ed.) [अ]पि (for [ए]व). Ś2.3 D2.8 देवीं सरस्वतीं चैव. —ᵈ) Ś D2.8.9 प्रजहौ; B2.4 त्रिदिवं (for प्रययौ). Ś V1 D2.8.9.12 T3.4 ततः; V3 नृप; B2.4 ययौ; B3 स्वयं (for दिवम्). D1.3.4 त्यक्त्वा तं राक्षसं ययौ; D5 मुक्त्वा संप्रजगाम ह; D6.7.10.11 T1.2 G M राक्षसं तं(M3 सा; M8 °सेंद्रं) जहौ पुनः. —After 40, Ñ V2.3 B D1.3.4.6.7.10.11 T1.2 G1.3 M1–3.5 (only l. 2).6.8–10 ins.:

176* ब्रह्मणा सह देवेषु गतेष्वथ नभस्तलम् ।
विमुक्तोऽसौ सरस्वत्या स्वां संज्ञामगमत्ततः ।

[ (l. 1) M8 देवैश्च (sic) (for देवेषु). Ñ V2.3 B गतेषु ब्रह्मपूर्वे(B3 °मुख्ये)षु (for the prior half). D6.7.10.11 M10 च (for [अ]थ). Ñ V2.3 B दैवतेषु (for गतेष्वथ). Ñ2 V2.3 B D10.11 T1.2 G1.3 M1–3.8.10 नभस्थलं. —(l. 2) B3 संत्यक्तो; B4 विमुष्टो (for विमुक्तो). D1.3.4 [स]थ (for ऽसौ). D1.3.4 स्व- (for स्वां). Ñ1 V2.3 B पुनरागतः(B1.3.4 °गमत्); D6.7.10.11 च ततो गतः (for अगमत्ततः). Ñ2 पूर्वां प्रकृतिमागतः (for the post. half). ]

41 ᵃ) T1.2 स (for तु). —ᵇ) D1.3.4 दुर्मतिः (for दुःखितः). —ᶜ) Ñ V2.3 B D1.3–7.10.11 T G3 M2.5.6.9 ई(B3 ता)दृशं (for कीदृशं). Ś Ñ V B D2.6–12 किमिदं; D1.3–5 T3 G1.2 M1.4.8.9 किं त्विदं (for किं न्विदं). —ᵈ) D7 (after corr. m. as in text) वचनात् (for वदनात्). Ñ V2 B वदनान्मम(B3 °न्मे वि-) निःसृतं; D5 ममाद्य वदनोद्गतं; D6 मम यद्वदनाच्च्युतं. —After 41, Ś Ñ2 V1.2 B1.2 D1.2.4.5.8.9.12 T3.4 ins.; while V3 cont. after 178*; whereas B3 D3 cont. after l. 1 of 178*:

177* अनभिप्रेतपूर्वं हि संमोहादिव भाषितम् ।

[ V3 D1.3.4 मे; B3 तु (for हि). Ś Ñ2 D2.5.8.12 T3.4 एव (for इव). B3 स्वपामीत्येव भाषितं (for the post. half). ]

—Thereafter, Ñ2 V2 B1.2 cont.; while Ñ1 B3.4 D3 ins. only l. 1 after 41; V3 ins. after 41:

178* भक्षयामीति वदता स्वप्स्यामीत्युदितं मया ।
संतप्यमानो दुःखार्तो विधून्वंश्चरणौ करौ ।
आत्मानमेव बहुशः श्वसन्निन्दन्पपात ह ।

[ (l. 1) B2 वक्तव्ये; D3 गदितं (for वदता). B2 व्याहृतं (for [इ]त्युदितं). B3 स्वपामीत्युक्तमेव तु (for the post. half). —After l. 1, B3 D3 cont. 177*. —V3 illeg. for l. 3. ]

—Thereafter, V3 cont. 177*.

—After 41, D6.7.10.11 T1.2 G M1–5.7–9 ins:

179* अहं व्यामोहितो मन्ये देवैरिति समाहितैः ।

[ D6.7.10.11 G1 M2.8.9 transp. मन्ये and देवैरिति. D6.7.10.11 M10 तदा(M10 समा)गतैः (for समाहितैः). ]

42 ᵃ) Ś V1 B3 D2.5.8.9.12 T3.4 ते तु (for सर्वे). —ᶜ) D1.3–6.8 श्लेष्मां(D1.4 °षां)तक-; G (ed.) श्लेष्मातकं. Ś1 V2 M10 -वने. Ś Ñ V1.3 B2–4 D1–5.8.9.12 T3 M6 नाम; V2 B1 राम (for गत्वा). —ᵈ) M4.7 तत्रैव (for तत्र ते). Ñ V2 B1.4 D1.3.4 T4 चिरं (for सुखम्). Ś V1.3 B2.3 D2.5.8.9.12 T3 M6 तत्र सर्वे(B2 ते ह; B3 तेष्व)वसंश्रि(D8 °स्थि)रं.

Colophon. —*Kāṇḍa name* : Ś1 D3 om. —*Sarga name*: Ś Ñ B1–3 D2.8.9.12 रावणादिवरप्रदानं; V2 रावणवरप्राप्तिः; V2.3 B4 रावणादिवरदानं(V3 °नो); D1.3.4 रावणविभीषणकुंभकर्णवरप्रदानो; D5 राक्षसवरप्रदानं; D6 रावणाय वरप्राप्तिः. —*Sarga no.* (figures, words or both): Ś Ñ1 V2.3 B1 D3 om.; V1 8; D8.9 9. —After colophon, D3 concludes with रामः; T4 with श्रीरामार्पणमस्तु; G M1.5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

# ११

G. 7. 11. 1
B. 7. 11. 1
L. 7. 10. 1

सुमाली वरलब्धांस्तु ज्ञात्वा तान्वै निशाचरान् ।
उदतिष्ठद्भयं त्यक्त्वा सानुगः स रसातलात् ॥ १
मारीचश्च प्रहस्तश्च विरूपाक्षो महोदरः ।
उदतिष्ठन्सुसंरब्धाः सचिवास्तस्य रक्षसः ॥ २
सुमाली चैव तैः सर्वैर्वृतो राक्षसपुंगवैः ।
अभिगम्य दशग्रीवं परिष्वज्येदमब्रवीत् ॥ ३
दिष्ट्या ते पुत्र संप्राप्तश्चिन्तितोऽयं मनोरथः ।
यस्त्वं त्रिभुवनश्रेष्ठाल्लब्धवान्वरमीदृशम् ॥ ४
यत्कृते च वयं लङ्कां त्यक्त्वा याता रसातलम् ।
तद्गतं नो महाबाहो महद्विष्णुकृतं भयम् ॥ ५
असकृत्तेन भग्ना हि परित्यज्य स्वमालयम् ।
विद्रुताः सहिताः सर्वे प्रविष्टाः स्म रसातलम् ॥ ६
अस्मदीया च लङ्केयं नगरी राक्षसोषिता ।
निवेशिता तव भ्रात्रा धनाध्यक्षेण धीमता ॥ ७
यदि नामात्र शक्यं स्यात्साम्ना दानेन वानघ ।
तरसा वा महाबाहो प्रत्यानेतुं कृतं भवेत् ॥ ८

## 11

$D_{12}$ begins with ॐ.

1 $^{a}$) $V_{3}$ च वरं लब्धान्; $B_{3}$ बलवांस्तत्र (for वर-लब्धांस्तु). —$^{b}$) $Ñ_{1}$ $V_{1}$ $D_{5-7.10.11}$ T G $M_{1.3.5.8.10}$ चैतान्; $D_{2.9.12}$ तद्वै; $M_{2.4.7.9}$ वै तान् (by transp.) (for तान्वै). $D_{1.3.4}$ विदित्वा तान्. $Ñ_{2}$ $G_{2}$ निशाचरः; $M_{5}$ समाहितान् (for निशाचरान्). $B_{3}$ ज्ञात्वा तांश्चैव राक्षसान्. —$^{d}$) Ś $D_{2.8.9.12}$ सानुजः.

2 $^{a}$) $B_{1}$ माल्यवांश् (for मारीचश्). —$^{b}$) Ś $V_{1}$ $D_{1-5.8.9.12}$ $T_{3.4}$ विरूपाक्षमहोदरौ. —$^{c}$) $D_{6}$ उपातिष्ठन्. Ś $D_{2.8.12}$ सराजानः; $V_{1}$ $D_{5}$ $T_{3.4}$ प्रहृष्टास्ते ($T_{4}$ °स्तु); $V_{3}$ $D_{9}$ स राजा तु ($D_{9}$ वै); $G_{2}$ सुताः सर्वे; $M_{4.7}$ भयं त्यक्त्वा; L (ed.) महाराज (for सुसंरब्धाः). —$^{d}$) $D_{1}$ राघव (for रक्षसः). —For $2^{cd}$, Ñ $V_{2}$ B subst.:

180* सचिवाः परिवार्यैनमुदतिष्ठन्सुमालिनम् ।

[ $B_{2}$ संविचार्यैनम्; $B_{3}$ परिचर्यैनम् (for परिवार्यैनम्). $B_{1}$ उपातिष्ठन्. ]

—After 2, $D_{1.3.4}$ ins.:

181* स तैः सर्वैः परिवृतो माल्यवान्वै निशाचरः ।
सदा मत्तैर्गजवरैर्वृतो वनगजो यथा ।

3 $T_{4}$ om. $3^{ab}$. —$^{a}$) Ñ $V_{2}$ $B_{2.4}$ प्रस्थितः (for सुमाली). $Ś_{1.2}$ तु ($Ś_{2}$ स) ततः; $Ś_{3}$ $V_{3}$ $D_{2.3.12}$ स तु तैः; $Ñ_{1}$ $B_{4}$ सह तैः; $Ñ_{2}$ $B_{2}$ $D_{6.7.9-11}$ $G_{2}$ $M_{10}$ सचिवैः; $V_{1}$ $D_{8}$ तु स तैः; $V_{2}$ $B_{3}$ सहितः; $B_{1}$ सदृशैः; $D_{1.4.5}$ $T_{3}$ $M_{6}$ स ($T_{3}$ तु)-सुतैः; G (ed.) स च तैः (for चैव तैः). $D_{6.7.10.11}$ $M_{10}$ सार्धं (for सर्वैर्). —$^{b}$) Ś $V_{3}$ $D_{1-4.8.9}$ $T_{3}$ $M_{1.6}$ -पुंगवः. —$^{c}$) $M_{5}$ समागम्य. —$^{d}$) $T_{4}$ अब्रुवन् (for अब्रवीत्).

4 $^{a}$) $D_{5}$ मे (for ते). $D_{5-7.10.11}$ $M_{3.10}$ वत्स (for पुत्र). Ś $Ñ_{1}$ $V_{1}$ $D_{1-5.8.9.12}$ $T_{3.4}$ संवृत्तश्; $V_{3}$ संजातश्. —$^{b}$) $B_{1}$ (m. also as in text) संचितो; $B_{4}$ चेष्टितो (for चिन्तितो). $G_{1}$ $M_{8}$ यो (for ऽयं). —$^{c}$) Ś $V_{3}$ $B_{1}$ $D_{2.9.12}$ $G_{2}$ $M_{5}$ यत्त्वं; $T_{3}$ यश्च; $G_{3}$ यत्र (for यस्त्वं). $D_{7.11}$ त्रिभुवने ($D_{11}$ °नं) (for त्रिभुवन-). $Ś_{1.2}$ $V_{3}$ $B_{2.3}$ $D_{2.8.9.12}$ -श्रेष्ठं; $Ś_{3}$ $Ñ_{1}$ $G_{3}$ -श्रेष्ठ; $D_{5.6}$ -श्रेष्ठो (for -श्रेष्ठाल्). —$^{d}$) $Ñ_{2}$ दत्तवान् (sic) (for लब्धवान्). $B_{1.3.4}$ ईप्सितं; $D_{6.7.10.11}$ उत्तमं (for ईदृशम्).

5 $^{a}$) $Ś_{1}$ तु; $Ś_{2.3}$ $D_{4.8.12}$ [ऽ]त्र (for च). $Ś_{3}$ बलं; $G_{1}$ वरं (for वयं). $B_{3}$ चास्य यं (sic) (for च वयं). $B_{3}$ सर्वे; $M_{1}$ त्यक्त्वा (for लङ्कां). —$^{b}$) $B_{3}$ संप्रयाता; $M_{1}$ लंकां प्राप्ता (for त्यक्त्वा याता). $D_{2}$ त्यक्त्वा पातालमीदृशं. —$D_{1.4}$ om. (hapl.) $5^{c}$–6. —$^{c}$) Ś $D_{8.12}$ उद्धृतं; $B_{2}$ यत्कृतं; $D_{3}$ तद्भूतं; $D_{5}$ न गतं; $G_{1}$ $M_{5}$ तत्कृतं; L (ed.) तद्धृतं (for तद्गतं). $D_{6}$ वो (for नो). —$^{d}$) $Ñ_{1}$ ज्ञात्वा; $V_{3}$ भवद्; $T_{1}$ मम; G (ed.) दिष्ट्या (for महद्). —After 5, $V_{3}$ (prior half illeg.) ins.:

182* ******** भविष्यसि न संशयः ।

6 $D_{1.4}$ om. 6 (cf. v.l. 5). $T_{3}$ om. $6^{ab}$. —$^{a}$) $Ñ_{1}$ $V_{3}$ तेन भग्नानि; $D_{6.7.10.11}$ $M_{10}$ तद्भयाद्भग्नाः; K (ed.) तद्भयाद्भीताः (for तेन भग्ना हि). —$^{b}$) $M_{8}$ परित्यक्त्वा. —$^{c}$) $D_{5}$ विहताः (for विद्रुताः). Ś $D_{2.5.8.12}$ $T_{3.4}$ सहसा; $D_{11}$ सगणाः (for सहिताः). $D_{9}$ सहसा विद्रुताः सर्वे. —$^{d}$) $B_{2}$ निरस्ताः (for प्रविष्टाः). $Ś_{1}$ Ñ B $D_{2.5.8.9.12}$ स्मो.

7 $^{ab}$) $D_{5}$ transp. लङ्केयं and नगरी. K (ed.) -[उ]चिता (for -[उ]षिता). $Ñ_{1}$ रक्षसोषिता; $V_{1}$ राक्षस-प्रिया; $B_{3}$ राक्षसोत्थिता; $D_{4}$ राक्षसयोषिता (hypm.). —$^{c}$) $Ś_{2.3}$ $D_{2.9.12}$ निषेविता. $M_{7}$ सह (for तव). Ś $D_{2.8.9.12}$ संप्रति या; $B_{2}$ भवद्भ्रात्रा (for तव भ्रात्रा). —$^{d}$) $D_{1.3.4}$ सा पुनः (for धीमता).

8 $^{a}$) $Ñ_{1}$ तु; $Ñ_{2}$ $V_{1}$ $B_{1.2}$ $D_{6}$ न; $V_{2}$ $B_{3}$ [अ]द्य; $B_{4}$ [इ]ह; $D_{1.4}$ [अ]पि (for [अ]त्र). $Ñ_{1}$ शक्यं ते; $Ñ_{2}$ शक्येयं; $V_{2}$ $B_{2-4}$ शक्येत; Cg.k.t as in text (for शक्यं स्यात्). $D_{9}$ या देवतावन्न शक्यं स्यात् (hypm.); $T_{3}$ यदि नाम स शक्या स्यात् (sic). —$^{b}$) $M_{8}$ साम- (for साम्ना). Ś $Ñ_{2}$ $V_{1.3}$ $B_{1.4}$ $D_{2.5.8.9.12}$ $T_{3.4}$ वस्तुं त्वया; $V_{2}$ ते कुलज; $V_{2}$ (m. also) $B_{2}$ भेदेन च ($V_{2}$ वा) (for दानेन

त्वं च लङ्केश्वरस्तात भविष्यसि न संशयः ।
सर्वेषां नः प्रभुश्चैव भविष्यसि महाबल ॥ ९
अथाब्रवीद्दशग्रीवो मातामहमुपस्थितम् ।
वित्तेशो गुरुरस्माकं नार्हस्येवं प्रभाषितुम् ॥ १०
उक्तवन्तं तथा वाक्यं दशग्रीवं निशाचरः ।
प्रहस्तः प्रश्रितं वाक्यमिदमाह सकारणम् ॥ ११
दशग्रीव महाबाहो नार्हस्त्वं वक्तुमीदृशम् ।
सौभ्रात्रं नास्ति शूराणां शृणु चेदं वचो मम ॥ १२
अदितिश्च दितिश्चैव भगिन्यौ सहिते किल ।
भार्ये परमरूपिण्यौ कश्यपस्य प्रजापतेः ॥ १३

G. 7. 11. 15
B. 7. 11. 15
L. 7. 10. 14

वा ). Ñ1 D1.3.4 M6 साम्ना वा तरसापि( Ñ1 दारुणेन ) वा; B3 साम्ना वादेन रावण. —V3 om. $8^e$–$9^b$. —$^c$ ) B3 त्वरस्व ( for तरसा ). V2 च; B3 [ अ ]त्र; B4 तु; M5 [ अ ]पि ( for वा ). D1.3.4 M6 संप्रदानेन वा वीर. —B2 erroneously repeats $8^d$ after $10^a$. —$^d$ ) Ñ1 V1 D1.4.9 कुतो; D3 क्षमो ( for कृतं ). Ś Ñ1 V1 D2.8.9.12 भयं; D3 भवान् ( for भवेत् ). Ñ2 T3.4 त्वमर्हसि; Ck.t as in text ( for कृतं भवेत् ).

9 V3 om. $9^{ab}$ ( cf. v.l. 8 ). B2 repeats $9^{ab}$ ( followed by the first occurrence of l. 1 of 185* ) after $10^b$. —$^a$ ) Ś2.3 तव ( sic ); Ñ2 V1.2 B( B2 both times ) T1.2 G3 M1.3 त्वं तु; D1.4 त्वं हि; D12 त्वं वै. G2 लोक-( for लङ्का- ). Ś1 D8 तत्र ( for तात ). —$^b$ ) Ś2.3 D1.3–5.7.8.11 12 T2 भविष्यति ( sic ). —After $9^{ab}$, V1 D7.10.11 T3.4 ins.; while M3 ins. after 9 :

183* त्वया राक्षसवंशोऽयं निमग्नोऽपि समुद्धृतः ।

[ M3 तु ( for ऽपि ). ]

—Thereafter, M3 cont.; while V1 T3.4 ins. after 9 :

184* राक्षसानामयं पुत्र त्वया वंशः प्रतिष्ठितः ।
त्वं नाथस्त्वं प्रभुः स्वामी त्वमस्माकं परा गतिः ।

[ ( l. 1 ) M3 वत्स ( for पुत्र ). V1 M3 त्वयि ( for त्वया ). ] —$^c$ ) Ś V1.2 D2.8.12 T3 त्वं; D1.4.9 T4 च ( for नः ). Ñ1 त्वं च ( for चैव ). —$^d$ ) T1.4 G M1–5.8.9 नित्यमेव ( for भविष्यसि ). Ś Ñ1 V2 D1.3.4.8.12 M9 महाबलः ; V1.3 T4 हि नः सदा; T3 हिते सदा ( for महाबल ). M7 नित्यमेवं निशाचर.

10 $^a$ ) M6 अब्रवीच्च ( for अथाब्रवीद् ). B2 महाबाहो. —B2 reads $10^b$ in marg. and then repeats $9^{ab}$ ( followed by the first occurrence of l. 1 of 185* ). —$^d$ ) B3 तु ( for प्र- ). D6.7.10.11 T1.2 G M1–5.7–10 नार्हसे ( M3.5 °स्त्वं ) वक्तुमीदृशं. ❁ Ck : अर्हते अर्हतीति यावत् ( ? ) ; Ct : नार्हसे । ज्येष्ठनिरसनं वक्तुं नार्हसीत्यर्थः . ❁ —After 10, Ñ V2.3 B1.2( repeats l. 1 here in marg., reading it for the first time after the second occurrence of $9^{ab}$ ).3.4 D5 ins. :

185* इत्येवमुक्तः स तदा सुमाली रावणेन ह ।
नोवाच किंचित्तत्रैव न्यवसच्च सुहृद्वृतः ।

[ ( l. 1 ) Ñ1 प्रहसन् ( for स तदा ). D5 सुमालि. V2 B1 च; V3 D5 हि ( for ह ). ]

—After 10, V1 T3.4 ins. :

186* एवमुक्त्वा दशग्रीवो वसंस्तत्र महाबलः ।

[ V1 रणे तत्रावसत्प्रभुः ( for the post. half ). ]

—Thereafter, V1 cont.; while D6.7.10.11 T1.2 G1.3 M1.3.6.10 K ( ed. ) ins. after 10 :

187* सुमाली राक्षसेन्द्रेण प्रत्याख्यातो बलीयसा ।

[ D7.10.11 साम्ना हि; K ( ed. ) साम्नापि ( for सुमाली ). D6.7.10.11 M10 गरीयसा. ]

—Then, all the above MSS. ( except V1 ) cont. :

188 किंचिन्नाह तदा रक्षो ज्ञात्वा तस्य मनोगतम् ।

[ G1 किंचिदाह ( for किंचिन्नाह ). T1.2 M3 ततो ( for तदा ). D6.7.10.11 चिकीर्षितं; M6.10 मनोरथं ( for मनोगतम् ). ]

—Thereafter, D11 reads श्रीरामाय रामचन्द्राय वेधसे नमः. —T1 M1.3.10 further cont.; while Ś Ñ V B D1–5.7–12 T2–4 G1.3 M6 subst. for $11^{ab}$ :

189* केनचित्त्वथ कालेन वसन्तं तत्र रावणम् ।

[ Ñ2 V3 B2–4 D1.3.4.7.10.11 कस्यचित्त्वथ कालस्य ( for the prior half ). D1.3.4.7.10.11 रावणं ततः ; T1 तत्र राक्षसं ( for तत्र रावणम् ). V2 निवसंस्तत्र रावणः ( for the post. half ). ]

11 D6 om. $11^{ab}$. —$^a$ ) M10 तदा ( for तथा ). T1 G2 M5 निशाचरं ( for निशाचरः ). —For $11^{ab}$, Ś Ñ V B D1–5.7–12 T2–4 G1.3 M6 subst. 189*. —$^c$ ) Ñ1 V1.2 B2–4 D1.3–5 प्रसृतं; D2.8.12 प्रथितं; G2 प्रश्नुतं ( for प्रश्रितं ). G1 उक्तवाक्यं तथा वाक्यं. —$^d$ ) D1.3.4 महामतिः ; D6.7.10.11 T1.2 स रावणं ( for सकारणम् ). Ś Ñ V B D2.5.8.9.12 T3.4 M6 इदं ( Ñ1 तदा ) राक्षस( V3 B4 वचन )मब्रवीत्.

12 After $12^a$, Ñ V2 B1.2.4 ins. :

190* यत्पुरा प्रोक्तवानसि ।
वित्तेशो गुरुरस्माकमिति तच्च निबोध मे ।
ननु वीर महाबाहो.

[ ( l. 2 ) Ñ2 तात ( for तच्च ). —( l. 3 ) Ñ1 तत्र वीर; V2 B1.4 दशग्रीव ( for ननु वीर ). ]

—$^b$ ) D1.3.4.6.7.10.11 M4.7.10 नार्हसे. Ś V3 D2.8.9.12 वाक्यम् ; B3 उक्तम् ( for वक्तुम् ). —$^c$ ) Ñ1 सौहार्दं ( for सौभ्रात्रं ). —$^d$ ) Ś Ñ V B D1–6.8.9.12 T3.4 M6 शृणु भूयो वचश्च मे( B2 °चो मम ).

13 $^b$ ) Ñ2 B3.4 द्वे एते ( with hiatus ); V3 द्वेत्र

G. 7. 11. 16
B. 7. 11. 15
L. 7. 10. 15

अदितिर्जनयामास देवांस्त्रिभुवनेश्वरान् ।
दितिस्त्वजनयद्दैत्यान्कश्यपस्यात्मसंभवान् ॥ १४
दैत्यानां किल धर्मज्ञ पुरेयं सवनार्णवा ।
सपर्वता मही वीर तेऽभवन्प्रभविष्णवः ॥ १५
निहत्य तांस्तु समरे विष्णुना प्रभविष्णुना ।
देवानां वशमानीतं त्रैलोक्यमिदमव्ययम् ॥ १६
नैतदेको भवानेव करिष्यति विपर्ययम् ।
सुरैराचरितं पूर्वं कुरुष्वैतद्वचो मम ॥ १७
एवमुक्तो दशग्रीवः प्रहस्तेन दुरात्मना ।
चिन्तयित्वा मुहूर्तं वै बाढमित्येव सोऽब्रवीत् ॥ १८
स तु तेनैव हर्षेण तस्मिन्नहनि वीर्यवान् ।
वनं गतो दशग्रीवः सह तैः क्षणदाचरैः ॥ १९
त्रिकूटस्थः स तु तदा दशग्रीवो निशाचरः ।
प्रेषयामास दौत्येन प्रहस्तं वाक्यकोविदम् ॥ २०
प्रहस्त शीघ्रं गत्वा त्वं ब्रूहि नैर्ऋतपुंगवम् ।
वचनान्मम वित्तेशं सामपूर्वमिदं वचः ॥ २१

ते ( for भगिन्यौ ). M9 हि च ते; Cg.k.t as in text ( for सहिते ). D6.7 M10 उभे ( with hiatus ) ; D10.11 हिते ( for किल ). Ś V2( m. also ).3 B1.2 D2.5.8.9.12 T3.4 द्वे भगिन्यौ( T3.4 भगिन्यौ द्वे [ by transp. ] ) बभूवतुः; Ñ1 V1 भगिन्यौ संबभूवतुः. —d ) T1.2.4 G M1–6.8–10 काश्यपस्य. Ś V1.3 D1–5.8.9.12 T3.4 M6 महात्मनः ( for प्रजापतेः ).

14 For 14ab, Ś Ñ V B D2.5.8.9.12 T3.4 subst.:

191* अदित्यां जज्ञिरे देवास्तस्यां त्रिभुवनेश्वराः ।

[ Ñ V2.3 B1.2.4 तदा; B3 त्रयस्; T4 ते सुस् ( for तस्यां ). V1 तस्यास्ते भुवनेश्वराः ( for the post. half ). ]

—c ) K ( ed. ) पुत्रान् ( for दैत्यान् ). —d ) Ñ2 V2 B कश्यपाद् ; T1.2.4 G M काश्यपस्य ( for कश्यपस्य ).

15 a ) M5 खलु ( for किल ). —b ) Ś V1 D2.5.8.9.12 T1.3.4 G1 भूरियं; B1 D6 पुरीयं; D1.3.4 पुरासीत् ( for पुरेयं ). Ś2.3 D7.8.12 T2 वसनार्णवा; V3 D6 T3.4 समहार्णवा; B1 सरसार्णवा; M8 किल सार्णवा. —c ) Ś V1.3 D2.5.8.9 ( marg. ).12 T3.4 आसीत्सपर्वतवना; Ñ V2 B1.2.4 आसीत्सपर्वता भूमिः; B3 आसीत्सपर्वता वीर; D4 G1 सपर्वता महावीर ( G1 °भाग ). —d ) B2 त्वभवन् ; T4 तेचरन् ( for तेऽभवन् ).

16 B3 om. 16ab. —a ) T1 G1 दैत्या हतास् ; M3 दैत्यान्हत्वा ( for निहत्य तांस् ). Ñ V2 B1.2.4 ततस्ते निहताः सर्वे. —c ) M4 आपन्नं ( for आनीतं ). Ś V1.3 D2.5.8.9.12 T3.4 M6.7 देवतानां वशं( D5.9 °शे ) नीतं; Ñ V2 B देवानां च ( Ñ2 तु ) वशं नीतं. —d ) B3 अब्रुवन् ( sic ) ( for अव्ययम् ). —After 16, Ñ V2.3 B D3.5 ins.:

192* तथा वैरमपर्यन्तं गरुडस्योरगैः सह ।
भ्रातृभिः संप्रसक्तं हि संहारो यस्य नाभवत् ।

[ ( l. 1 ) V3 अथ; D3.5 यथा. Ñ V3 B4 अपर्यातं; B1 अपर्यस्तं ( for अपर्यन्तं ). —( l. 2 ) Ñ2 वै; B2 च; D3 तत् ( for हि ). D5 संप्रसंसक्तो. V3 यैः पराभवं ( for यस्य नाभवत् ). ]

17 a ) D1.4 किं तद् ; M6 इदम् ( for नैतद् ). Ś Ñ V1.3 B D1–5.8.9.12 T3 M6 अथ; V3 अत्र; G2 M4.7.9 एवं ( for एव ). —b ) M4 भविष्यति ( for करि° ). —M10 om. 17cd. —c ) T1 M3.5 आचरितो. B4 यच्च; T1 M3.5 मार्गस्; G2.3 M1.2.4.8.9 मार्गं ( for पूर्वं ). Ś V1.3 B3 D2.5–12 T3.4 G1 सुरासुरैराचरितं; T2 सुरेशचरितो मार्गस्. ❀ Cv : सुरैराचरितं मार्गं करिष्यामीति पूर्वेण संबन्धः. ❀ —d ) D6.7.10.11 T1.2 G M1–5.8.9 तत्कुरुष्व ( for कुरुष्वैतद् ).

18 b ) Ñ2 महात्मना; D1.3.4 [ अ ]मितौजसा; T1.2 G1.3 M1–4.7–9 सकारणं; G2 M5 स रावणः ( for दुरात्मना ). D6.7.10.11 M6.10 प्रहष्टेनांतरात्मना. —c ) Ś1 D2.8 मुहूर्तं; D9 सुमुहूर्तं ( hypm. ) ( for मुहूर्तं ). Ś1 Ñ V2 B D2.8.9.12 तु ( for वै ). Ś2.3 मुहूर्तेन ( for मुहूर्तं वै ). —d ) M6 एवम् ( for एव ). V3 D5 T1.2 G2.3 M1.3.5 चाब्रवीत् ; M6 अब्रवीत् ( for सोऽब्रवीत् ).

19 a ) Ś1 D8 ततस् ; M9 सह ( for स तु ). —c ) Ś V1.3 B3 D2.5.6.8.12 T3.4 वनाद् ; Ñ V2 B1.2.4 लंकां; D1.3.4 एवं; Cv as in text ( for वनं ). V2 यातो; D1.3.4 स्थितो ( for गतो ). —d ) B3.4 M10 सहितैः; D5 त्रिकूटं ( for सह तैः ).

20 Ś2.3 om. 20ab. —a ) D1.3.4 M6 त्रिकूटस्थस्य ( for त्रिकूटस्थः स ). T2 ह ( for तु ). —b ) Ñ2 महाबलः; G2 M4.5.7 महातपाः ( for निशाचरः ). D1.3.4 धनदस्य दशाननः. —c ) Ś2 B2–4 D4.12 दैत्येन; D9 T1 G2 M5 दूत्येन; Ck.t as in text ( for दौत्येन ). —d ) D10.11 -कोविदः.

21 a ) D12 reads प्रहस्त in marg. V1 गच्छ शीघ्रं; V3 D1.3.4 M6 गत्वा शीघ्रं ( by transp. ) ; B1.4 D6.7.10.11 M10 शीघ्रं गच्छ ( for शीघ्रं गत्वा ). Ś B2 D8.12 T4 M6.7 तं; T3 M1.2.8.9 तु ( for त्वं ). Ñ1 V2 त्वं गत्वा ( by transp. ); Ñ2 तं गत्वा; B3 त्वं गच्छ ( for गत्वा त्वं ). —b ) Ñ V2 B राक्षस- ( for नैर्ऋत- ). Ś Ñ2 V2.3 B D5.7.8.12 T2.3 G1.3 M1.2.6–9 -पुंगव; D1.3.4 -सत्तमं ( for -पुंगवम् ). G2 M4.5 ब्रूहि ज्येष्ठं ममाज्ञया. —c ) D6.7.10.11 वचसा; G2 भ्रातरं; M5 वचनं ( for वचनान् ). —d ) G2 सांत्वपूर्वम्.

इयं लङ्का पुरी राजन्राक्षसानां महात्मनाम् ।
त्वया निवेशिता सौम्य नैतद्युक्तं तवानघ ॥ २२
तद्भवान्यदि साम्नैतां दद्यादतुलविक्रम ।
कृता भवेन्मम प्रीतिर्धर्मश्चैवानुपालितः ॥ २३

इत्युक्तः स तदा गत्वा प्रहस्तो वाक्यकोविदः ।
दशग्रीववचः सर्वं वित्तेशाय न्यवेदयत् ॥ २४
प्रहस्तादपि संश्रुत्य देवो वैश्रवणो वचः ।
प्रत्युवाच प्रहस्तं तं वाक्यं वाक्यविशारदः ॥ २५

G. 7. 11. 30
B. 7. 11. 30
L. 7. 10. 0

22 ^a) B1 नाम; M3 पूर्वं (for राजन्). —After 22^ab, Ñ V2.3 B D3.5 ins.:

193* निवासो देवविहितः सर्वलोकपरिश्रुतः ।
किंचित्कारणमुद्दिश्य त्यक्तासीद्राक्षसैरियम् ।
ते पुनः कालसमये स्वं निवासमुपागताः ।

[ (l. 1) Ñ2 B4 सुर- (for सर्व-). D5 -नमस्कृतः (for -परिश्रुतः). —(l. 2) B2 युक्ता (for त्यक्ता). —(l. 3) Ñ1 V2 B1 स्व-; B3 सं- (for स्वं). Ñ1 इहागताः (for उपागताः). ]

—^c) B3 निवासिता; M7 निवेदिता; Ck.t as in text (for निवेशिता). Ś D2.8.9.12 यत्तु; Ñ V1.2 B चेयं; V3 यच्च; D5 चैव; T3 ह्यत्र; T4 ह्यद्य (for सौम्य). —^d) Ś Ñ1 V1 D2.5.8.9.12 T3 तन्न युक्तमिदं कृ(T3 श्रु)तं; Ñ2 V2 B तत्ते न सदृशं कृ(B2 °शीकृ)तं(B3 वचः); V3 तदेवं किमिदं कृतं; T4 तन्मया क्षमितं कृतं. —For 22^cd, D1.3.4 M6 subst.:

194* निवेशिता त्वया वीर न तु युक्तमिदं कृतम् ।

[ M6 च (for तु). ]

23 B3 om. (hapl. see var.) 23-25^b. —^a) Ñ V2.3 B1.2.4 D3 M1-4.6-9 नामैतां; V1 साम्ना मां; D1.4 मामेतां; D7.10.11 G2 M5 नो ह्यद्य; T1.2 G1.3 तामेतां (G1 °नां); T3.4 साम्नैनां (for साम्नैतां). D6 M10 तद्भवानधुना चैतद्. —^b) Ś V3 B1.4 D2.5.6.8.12 -विक्रमः. —^c) D1.3.4 च मे (for मम). V2 B2 मम भवेत (by transp.) (for भवेन्मम). M6 कृते भवेद्धि मे प्रीतिर्. —After 23, D1.3.4 ins.:

195* बलादहं ग्रहीष्यामि देवतानां च पश्यताम् ।

24 B3 om. 24 (cf. v.l. 23). For 24-32, Ś D2.8.9.12 subst. 205*. —^a) Ñ1 V1 तेन; B4 [आ]गत्य (for गत्वा). —For 24^ab, D1.3.4 M6 subst. l. 1 of 205*, while for 24^ab, D5-7.10.11 S (except M6) subst.:

196* स तु गत्वा पुरीं लङ्कां प्रहस्तो धनदं तथा ।

[ T1.4 G3 M1.3.8 तदा (for तथा). D5-7.10.11 M10 धनदेन सुरक्षितां. ]

—D1 om. 24^c - 28^b. —For 24^cd, D5-7.10.11 S subst.:

197* अब्रवीत्परमोदारं वित्तपालमिदं वचः ।

—Thereafter, all the above MSS. cont.:

198* प्रेषितोऽहं तव भ्रात्रा दशग्रीवेण सुव्रत ।
त्वत्समीपं महाबाहो दौत्येन धनदेश्वर ।
तच्छ्रूयतां महाप्राज्ञ सर्वशास्त्रविशारद ।
वचनं मम वित्तेश यद्ब्रवीति दशाननः ।
इयं किल पुरी लङ्का सुमालिप्रमुखैः पुरा । [5]
भुक्तपूर्वा विशालाक्ष राक्षसैर्भीमविक्रमैः ।
तेन विज्ञाप्यते योऽयं साम्प्रतं विश्रवात्मज ।
तदेषा दीयतां तात याचतस्तस्य सामतः ।

[ (l. 1) G2 M4.5.7 रावणे(G2 °क्षसे)न महात्मना (for the post. half). —(l. 2) T3.4 -समीपे. —D5-7.10.11 om. from the post. half of l. 2 up to the prior half of l. 3. T1 M1.5.10 दूत्येन (for दौत्येन). —(l. 3) G2 M4.5.7 -विदां वर (for -विशारद). D5-7.10.11 M10 सर्वशस्त्रभृतां वर (for the post. half). —D5 om. from second म in l. 4 up to first वि in l. 6. —(l. 5) G2 M4.7 लंका-; M3 रम्या; M10 खलु (for किल). D6.7.10.11 M8.10 रम्या; G2 M4.7 सौम्य (for लङ्का). G1.3 M2.3.8-10 सुमाली-. M3 किल; M4.7 कृता (for पुरा). —After l. 6, D11 reads श्रीरामाय नमो नमस्तेस्तु तस्मै नमः. —(l. 7) D5-7 चेयं; D10.11 M10 सोयं; T1.2 M3 चेदं (for योऽयं). T3.4 त्वया विश्राम्यते येयं (for the prior half). T1 M3 विश्रवःसुत (for विश्रवात्मज). —(l. 8) D5 भ्रातः; G2 M2.4 9 आर्य; M5 अद्य; M7 अस्य (for तात). G2 धीमतः (for सामतः). D5 M6 याचिता तत्र सा मया (for the post. half). ]

25 D1 om. 25 (cf. v.l. 24). B3 om. 25^ab (cf. v.l. 23). For subst. in Ś D2.8.9.12, cf. v.l. 24 and 32. —^a) Ñ2 V B1.2.4 D3.5.6 T1.2 G3 M2.3.5.8.9 [अ]भि-; M1 [इ]ति (for [अ]पि). —^b) Ñ V1.2 B1.2.4 सर्वं (for देवो). D3.4 तदा (for वचः). V3 सार्धं वैश्रवणेन च. —^c) M10 तु (for तं). —^d) D7.10.11 G1 M5.10 -विदां वरः (for -विशारदः). —For 25^cd, Ñ V B subst.:

199* उवाच वाक्यं वाक्यज्ञः प्रहस्तं स निशाचरम् ।

—For 25, T3.4 M6 subst.:

200* एवमुक्तः प्रहस्तेन प्रत्युवाच धनेश्वरः ।

—Thereafter, T3.4 M6 cont.; while D5-7.10.11 M3 K (ed.) ins. after 25:

201* दत्ता ममेयं पित्रा तु लङ्का शून्या निशाचरैः ।
निवेशिता च मे रक्षो दानमानादिभिर्गुणैः ।

[ (l. 1) T3.4 या (for तु). M3 transp. पित्रा and लङ्का. T3.4 M6 शून्या लंका तु राक्षसैः (for the post. half). —(l. 2) K (ed.) निवासिता. M3 यक्षैर् (for रक्षो). M3 दानमानादिसद्गुणैः (for the post. half). ]

—Thereafter, T3.4 further cont.; while Ñ V2.3 B D3-7.10.11 T1 M3.6.10 ins. after 26:

G. 7. 11. 43
B. 7. 11. 32
L. 7. 10. 0

ब्रूहि गच्छ दशग्रीवं पुरी राज्यं च यन्मम ।
तवाप्येतन्महाबाहो भुङ्क्ष्वैतद्धतकण्टकम् ॥ २६

सर्वं कर्तास्मि भद्रं ते राक्षसेशवचोऽचिरात् ।
किं तु तावत्प्रतीक्षस्व पितुर्यावन्निवेदये ॥ २७

एवमुक्त्वा धनाध्यक्षो जगाम पितुरन्तिकम् ।
अभिवाद्य गुरुं प्राह रावणस्य यदीप्सितम् ॥ २८

एष तात दशग्रीवो दूतं प्रेषितवान्मम ।
दीयतां नगरी लङ्का पूर्वं रक्षोगणोषिता ।
मयात्र यदनुष्ठेयं तन्ममाचक्ष्व सुव्रत ॥ २९

ब्रह्मर्षिस्त्वेवमुक्तोऽसौ विश्रवा मुनिपुंगवः ।
उवाच धनदं वाक्यं शृणु पुत्र वचो मम ॥ ३०

दशग्रीवो महाबाहुरुक्तवान्मम संनिधौ ।
मया निर्भर्त्सितश्चासीद्बहुधोक्तः सुदुर्मतिः ॥ ३१

स क्रोधेन मया चोक्तो ध्वंसस्वेति पुनः पुनः ।
श्रेयोभियुक्तं धर्म्यं च शृणु पुत्र वचो मम ॥ ३२

---

202* अविभक्तं त्वया सार्धं राज्यं यच्चापि मे वसु ।
[T1 M3 मया (for त्वया). Ñ1 सर्वं (for सार्धं). B1.3 [अ]स्ति (for [अ]पि).]

—Thereafter, Ñ V2.3 B further cont.:

203* अहं गच्छामि कैलासं निवासाय सहानुगः ।
लङ्कामावस भद्रं ते स्वधर्मं तत्र पालय ।

[(l. 1) B1.3.4 महागिरिं (for सहानुगः). —(l. 2) B2 लंकायां वस. V2 सु- (for स्व-). Ñ1 B1 अनुपालय; V2 * * पालय (damaged); B2 परिपालय (for तत्र पालय).]

—After 202*, D5 cont. l. 1–2 of 205*.

26 V1 D1 om. 26 (for D1, cf. v.l. 24). For subst. in Ś D2.8.9.12, cf. v.l. 24 and 32. Ñ V2.3 B read 26 (followed by 202* and 203*) after 210*. —[a]) T3.4 त्वं हि (for गच्छ). B2 D8.4 गच्छ ब्रूहि (by transp.). —[b]) Ñ1 B D3 पुरीं; G2 पुरं (for पुरी). B4 रम्यं (for राज्यं). —[c]) D4 [ए]व तत्; T3.4 G3 M1.2.4.5.7–9 [अ]प्येवं (M2.8.9 °व) (for [अ]प्येतत्). M3 अवाप्यैतत् (for तवाप्येतत्). Ñ2 महाभाग (for महाबाहो). —[d]) D3 G1 M1.9 [ए]नं; D4 T1.2 M3 तद्; T3.4 M7 [ए]वं; M2.4 [ए]व (for [ए]तद्). Ñ2 V2.3 गत-; B2 D4 व्रत-; B3 वन- (sic); B4 धृत-; M1 वीत- (for हृत-). B1 D5–7.10.11 M10 भुंक्ष्व राज्यम (B1 चैतद्)कंटकं; M5 भुंक्ष्वेमां हतकंटकां. —After 26, D3–7.10.11 T1 M3.6.10 ins. 202*.

27 D1 om. 27 (cf. v.l. 24). D3–7.10.11 S om. 27. For subst. in Ś D2.8.9.12, cf. v.l. 24 and 32. —[b]) V2 B1 राक्षसेंद्र-.

28 D1 om. 28[ab] (cf. v.l. 24). For subst. in Ś D2.8.9.12, cf. v.l. 24 and 32. —[a]) D5 स मामुक्त्वा. —[c]) Ñ V B [अ]ब्रवीत्तं च.

29 For subst. in Ś D2.8.9.12, cf. v.l. 24 and 32. —[b]) M8 प्रेरितवान्. —[c]) Ñ V B ममेयं दीयतां (for दीयतां नगरी). —[d]) V1 पूर्वं रक्षोषिता सदा; M6 भुक्तपूर्वा हि राक्षसैः. —D11 reads 29[ef] in marg. —[e]) Ñ V B तन्मया; D1.3.4 मया यद्; T3.4 G1 ममात्र (for मयात्र). —[f]) M4.5.7 तत्त्वम् (for तन्मम). V1 पृच्छतः (for सुव्रत). Ñ V2.3 B1.2.4 तदाचक्ष्व ममानघ; B3 तदाज्ञापय सांप्रतं.

30 For subst. in Ś D2.8.9.12, cf. v.l. 24 and 32. —[a]) D3 महर्षिस. D1.3.4 तु; T3.4 M6 हि; G1 वै (for ऽसौ). Ñ V B1.2.4 धनदेनैवमुक्तस्तु; B3 इति पुत्रवचः श्रुत्वा; G2 M4.5.7 तस्य तद्वचनं श्रुत्वा. —[c]) G1 [ए]नमिदं (for धनदं). Ñ V2 B सोब्रवीद्वचनं तत्र; V1.3 D5–7.10.11 प्रांजलिं धनदं प्राह; G2 M6 ऋजुर्वैश्रवणं वाक्यं. —[d]) V1.3 transp. शृणु and मम.

31 For subst. in Ś D2.8.9.12, cf. v.l. 24 and 32. —[a]) Ñ V1.2 B ममाप्येतद् (for महाबाहुर्). —[b]) Ñ1 B मुनि- (for मम). V1 मुनिसत्तम. —V3 om. 31[c]–32. —[c]) D1.3.4 तदा (for मया). Ñ1 V1.2 B T2 M10 चापि; Ñ2 सोपि; D1.3.4 M6 चासौ (for चासीद्). —[d]) V1 B1.2.4 M4 बहु चोक्तः; D1.3.4.10.11 T2–4 G M1.2.5–9 बहुशो (D1.4 °हुनो)क्तः; D5–7 बहुशोयं; M10 बहुधैव (for बहुधोक्तः). ❀ Cg.k.t: बहुशोक्त इति संधिश्छान्दसः (Ct °विरार्षः). ❀

32 V3 om. 32 (cf. v.l. 31). —[a]) D3 सक्रोधनं (for स क्रोधेन). Ñ V1.2 B पुनश्च (for मया). B2.3 चोक्तं; D6 प्रोक्तो (for चोक्तो). —[b]) V1 D6 G1 M1.4.5.7–10 ध्वंसेति च; D1.3.4 M6 ध्वंस ध्वंस; D7 ध्वस्तेति च; D10.11 ध्वंससे च; T4 M2 ध्वंसये (T4 °ते)ति; G2.3 ध्वंस चे (G3 *)ति (for ध्वंसस्वेति). Ñ V2 B1.3.4 ध्वंस ध्वंसेति वै मुहुः (B1.3.4 पुनः); B2 ध्वंसेते वै मुहुर्मुहुः; D5 ध्वस्तेति च मया पुनः. —[c]) D1.3 S श्रेयोयुक्तं च. D1.3–6 G2 M5.6.10 धर्मं च; M2 धर्मज्ञ (for धर्म्यं च). —[d]) T1.2 G1.3 M1.3 चैव (G1 °वं) (for पुत्र). —For 32[cd], Ñ V1.2 B subst.:

204* तच्छृणु त्वं वचः पुत्र मम धर्मार्थसंयुतम् ।

[B2 तच्छृणुष्व; B3 ततः शृणु (for तच्छृणु त्वं). V1 -संहितं; B4 -संमतं (for -संयुतम्).]

—For 24–32, Ś D2.8.9.12 subst., while D1.3.4 M6 subst. l. 1 for 24[ab]; whereas D5 cont. l. 1–2 after 202*:

वरप्रदानसंमूढो मान्यामान्यं सुदुर्मतिः ।
न वेत्ति मम शापाच्च प्रकृतिं दारुणां गतः ॥ ३३
तस्माद्गच्छ महाबाहो कैलासं धरणीधरम् ।
निवेशय निवासार्थं त्यज लङ्कां सहानुगः ॥ ३४
तत्र मन्दाकिनी रम्या नदीनां प्रवरा नदी ।
काञ्चनैः सूर्यसंकाशैः पङ्कजैः संवृतोदका ॥ ३५
न हि क्षमं त्वया तेन वैरं धनद रक्षसा ।
जानीषे हि यथानेन लब्धः परमको वरः ॥ ३६
एवमुक्तो गृहीत्वा तु तद्वचः पितृगौरवात् ।
सदारपौरः सामात्यः सवाहनधनो गतः ॥ ३७

G. 7. 11. 46
B. 7. 11. 44
L. 7. 10. 32

205* स गत्वा तस्य भवनं प्रहस्तो विनिवर्त्य च ।
दशग्रीवमुवाचेदं वाक्यं वाक्यविदां वरः ।
दशग्रीव महाबाहो वाक्यमुक्तवतो मम ।
पिता तव महायोगी विश्रवाः कुपितः प्रभुः ।
निर्भर्त्स्य तेन चाप्युक्तो ध्वंसिष्यति मुहुर्मुहुः । [5]
प्राञ्जलिं धनदं प्राह मम पुत्र वचः शृणु ।

[ (l. 1) Ś D2.8.12 वचनं; M6 वचनात् (for भवनं). D5 स श्रुत्वा वचनं तस्य (for the prior half). Ś2.3 प्राह तं (for प्रहस्तो). D1.3.4 वाक्यकोविदः; M6 विनयान्वितः (for विनिवर्त्य च). —(l. 2) D5.9 -विशारदः (D5 °दं) (for -विदां वरः). —(l. 5) D2.9 ध्वंसस्वेति (for ध्वंसिष्यति).]

33 a) Ś D2.8.9.12 -दानात्तु; Ñ V2 B D1.3.7 T3.4 G1 M1.2.9 Cg -प्रदानात् (for -प्रदान-). Ś3 संपूर्णो; D6 -संमोहो; M5 -सुमूढो (for -संमूढो). —b) T1.2 G1.3 M1.3.6 मान्यामान्यान्. Ś V1 D2.8.9.12 M6 स राक्षसः; Ñ V2.3 B न वेत्ति (Ñ2 °द) सः; D3 T3.4 G1 M3.4 स दुर्मतिः (for सुदुर्मतिः). —After 33ab, B3 ins.:

206* स्वेच्छया क्रियते कर्म अधर्मं नैव पश्यति ।

[Note hiatus between the two halves.]

—c) D6 T3.4 G2 Ck शापं च; D12 शापश्च; Cg.t as in text (for शापाच्च). Ñ V2.3 B न बिभेति च मे शापात्.

34 a) Ś D1–4.8.9.12 T G M1.2.4.6–9 तदागच्छ. Ñ V2.3 B तस्मात्प्रयाहि भद्रं ते (B3 च); V1 तदागच्छत गच्छामः. —c) T3.4 प्रवेशय. Ś Ñ V B D1–4.8.9.12 M6 निकेतार्थं; G1 तथात्यर्थं; Cg.k.t as in text (for निवासार्थं). —d) B3 त्यक्त-; D1.3–7.10.11 त्यक्त्वा; M4.7 सह; M6 त्यज्य; M10 मुक्त्वा (for त्यज). Ś D2.8.9.12 महाभुज; B2 G2 सहानुजः (for सहानुगः).

35 a) Ś2.3 D12 पुण्या; Ñ2 V2 B D1.3.4.6 M6 नाम; G2 रम्य- (for रम्या). Ñ1 मंदाकिनी नाम नदी. —b) D5–7.10.11 M10 उत्तमा (for प्रवरा). —c) D3 स्वर्ण- (for सूर्य-). —d) V1 पुष्करैर्; G2 संवृतैः (for पङ्कजैः). Ś V1.3 D1–4.8.9.12 T3.4 उपशोभिता; Ñ V2 B मंडितोदका; G2 संप्रतोदका. —After 35, D5–7.10.11 G2 M1–5.7.9.10 ins.:

207* कुमुदैरुत्पलैश्चैव अन्यैश्चैव सुगन्धिभिः ।

[Note hiatus between the two halves. D6 मुकुदैर् (meta.) (for कुमुदैर्). G2 अन्यैरेव; K (ed.) तथान्यैश्च (for अन्यैश्चैव).]

—Thereafter, all the above MSS. cont.; while Ñ V2.3 B D1.3.4 T G1.3 M6.8 ins. after 35:

208* तत्र देवाः सगन्धर्वाः साप्सरोरगकिंनराः ।
विहारशीलाः सततं रमन्ते सर्वदाश्रिताः ।

[ (l. 1) Ñ1 B1 T3.4 अप्स(Ñ1 साप्सु)रोरग-; V2 B2–4 G1.3 M1.2.4.5.8.9 साप्सरोगण- (for साप्सरोरग-). —(l. 2) D3 -लीलाः (for -शीलाः). B1 वसंते (for रमन्ते). Ñ V2.3 B1.2.4 धरणीधरे; D1.3.4 T1.4 G M1–5.8–10 सलिलं (D1.3.4 T4 °रितं) श्रिताः (G2 श्रमाः); D6 T2 M6.7 सरिदा (D6 संपदा; T2 सलिला) श्रिताः; T3 सततं श्रिया (for सर्वदाश्रिताः).]

—Then, Ñ V2.3 B2–4 cont.:

209* रमस्व पुत्र त्वमपि रम्ये तस्मिञ्शिलोच्चये ।

36 D5 om. 36.—a) G2 त्वयैवं (for क्षमं). Ñ V3 B1.2 D1.3.4.6.7.10.11 M6.10 तवानेन; V2 B3 तदानेन; B4 ते कालेन; G1.3 M4.7.8 त्वयानेन; G2 त्वया वीर (for त्वया तेन). Ś V1 D2.8.9.12 न ते क्षमं तेन पुत्र (V1 मम; D9 समं). —G3 mostly damaged for b. —b) V1 वरद (for धनद). —c) Ś Ñ2 V B1.3.4 D8.12 च; D2 न; D9 * (for हि). V2 B4 D9 तथा; V3 तदा; T1 यदा (for यथा). Ś Ñ2 V1.3 B1.3.4 D2.8.9.12 T G M1–5.7.9 तेन; M8 वीर (for [अ]नेन). —For 36cd, Ñ1 B2 subst.; while Ñ2 V2.3 B1.3.4 ins. after 36:

210* तथेत्युक्त्वा स पितरमभिवाद्य धनेश्वरः ।
ययौ लङ्कां पुनस्तूर्णं प्रहस्तं चेदमब्रवीत् ।

[ (l. 2) V3 transp. ययौ and लङ्कां.]

—Then, all the above MSS. read 26 followed by 202* and 203*.

37 a) G3 [आ]शु (for तु). —b) G1 वचनं (for तद्वचः). —For 37ab, Ś V1 D1–4.8.9.12 M6 subst.:

211* एवमुक्त्वा गृहीत्वा च पिता तव धनेश्वरम् ।

[V1 उक्तो (for उक्त्वा). M6 तु (for च). V1 प्राह; D1.3.4 M6 तं च (M6 तु) (for तव).];

while Ñ V2.3 B subst.:

212* एवमुक्त्वा धनाध्यक्षो बलेन महता तदा ।

[Ñ2 V2 उक्तो (for उक्त्वा). V2 संहता (for महता).]

—c) Ś D2.8.9.12 -दारपुत्रः; Ñ V2 B D1.3.4 M6 -पौरदारः (D1.3.4 M6 °रं); D5–7.10.11 M10 -दारपुत्रः (for -दारपौरः).

G. 7. 11. 47
B. 7. 11. 45
L. 7. 10. 33

प्रहस्तस्तु दशग्रीवं गत्वा सर्वं न्यवेदयत् ।
शून्या सा नगरी लङ्का त्रिंशद्योजनमायता ।
प्रविश्य तां सहास्माभिः स्वधर्मं तत्र पालय ॥ ३८
एवमुक्तः प्रहस्तेन रावणो राक्षसस्तदा ।
विवेश नगरीं लङ्कां सभ्राता सबलानुगः ॥ ३९
स चाभिषिक्तः क्षणदाचरैस्तदा
निवेशयामास पुरीं दशाननः ।
निकामपूर्णा च बभूव सा पुरी
निशाचरैर्नीलबलाहकोपमैः ॥ ४०
धनेश्वरस्त्वथ पितृवाक्यगौरवा-
न्न्यवेशयच्छशिविमले गिरौ पुरीम् ।
स्वलंकृतैर्भवनवरैर्विभूषितां
पुरंदरस्येव तदामरावतीम् ॥ ४१

इति श्रीरामायणे उत्तरकाण्डे एकादशः सर्गः ॥ ११ ॥

Ś D1–4.8.9.12 M6 सामात्यं. —$^{d}$) Ś V1 D1–4.8.9.12 M6 -धनं; B3 -वनो (sic); G1 -गणो (for -धनो). B2 सबलो धनदो गतः. —After 37, D11 reads श्रीरामाय नमः श्रीशः; while after 37, S (except M6) reads $38^{cd}$ (followed by 215*).

38 V2 om. 38–39. Ś V1 D2.5.8.9.12 om. $38^{ab}$. —$^{a}$) Ñ V3 B D6.7.10.11 [ऽ]थ; G2 M10 च (for तु). D1 ब्रूहि गच्छ; G3 damaged (for प्रहस्तस्तु). —$^{b}$) Ñ V3 B D1.3.4.6.7.10.11 M6 गत्वा वचनमब्रवीत्. —After $38^{ab}$, Ñ V3 B D1.3.4.6.7.10.11 T G M1.2.4–10 ins.; while M3 ins. after $39^{ab}$:

213* प्रहृष्टात्मा दशग्रीवः सहामात्यः सहानुगः ।

[ Ñ V3 B D6.7.10.11 महात्मानं; D1.3.4 M6 महाबाहुं (for दशग्रीवः). M1 सानुबंधः (for सहामात्यः). Ñ V3 B D1.3.4.6.7.10.11 M6 सहामात्यं सहानुजं (Ñ1 D7 M6 °गं) (for the post. half). ]

—Thereafter M10 cont. :

214* प्राह तं तु दशग्रीवं सहामात्यैः सहानुजैः ।

—D4 om. (hapl.) from लङ्का in $38^{c}$ to नगरीं in $39^{c}$. S (except M6) reads $38^{cd}$ (followed by 215*) after 37. —$^{c}$) T3 कृता; T4 श्रिता (for शून्या). V1 M4 रम्या (for लङ्का). —D1 om. (hapl.?) $38^{d}$–$39^{c}$. —$^{d}$) Ñ V3 B D6.7.10.11 त्यक्त्वैनां धनदो गतः. —After $38^{cd}$, S (except M6) ins. :

215* क्षिप्रमेवाभवद्राम निर्जना चापि निर्भया ।

[ G1 राजन् (for राम). G2 निर्जिता (for निर्जना). T3.4 [अ]पीह; M3.5 चाथ (for चापि). G3 नि ** (damaged); M9 निर्मला (for निर्भया). M8 निर्जनापि विनिर्भया (for the post. half). ]

—$^{e}$) Ś D2.8.12 M7 प्रवेश्यतां; Ck.t as in text (for प्रविश्य तां). Ś V1.3 D2.5.8.9.12 सहामात्यः; T3.4 च सर्वैस्तैः; Ck.t as in text (for सहास्माभिः). Ñ B प्रविश त्वं महाबाहो. —$^{f}$) Ñ B1.2.4 परि-; B3 अनु-; M5 तात; K (ed.) Ct प्रति- (for तत्र). T3 पालयन्; Ck.t as in text (for पालय). V1 स्वधर्मः परिपाल्यतां (m. also °लय).

39 V2 om. 39; D1 om. $39^{abc}$; D4 om. up to नगरीं in $39^{c}$ (for all, cf. v.l. 38). —$^{a}$) D6.7.10.11 T3.4 M10 दशग्रीवः; D12 दशग्रीवी; G1 ततस्तेन (for प्रहस्तेन). —$^{b}$) T2 राक्षसेश्वरः (for राक्षसस्तदा). Ś Ñ V1.3 B D2.3.5.8.9.12 T3.4 M6 दशग्रीवो (T3.4 प्रहस्तेन) निशाचरः; D6.7.10.11 M10 प्रहस्तेन महाबलः; G1 M1.2.8.9 दशग्रीवो महाबलः. —After $39^{ab}$, M3 ins. 213*. —$^{c}$) Ś V1.3 D2.5.8.9.12 M1 प्रविवेश पुरीं लंकां; Ñ B निवेशयामास पुरीं. —$^{d}$) D6 भ्रातृभिः (for सभ्राता). Ñ2 सपुर- (for सबल-). Ś V1.3 D2.5.8.9.12 भ्रातृभिः सहितोनघ; Ñ1 T3.4 सह भ्रात्रा सहानुगः; D1.3.4 सानुगो भ्रातृभिः सह; D7.10.11 M10 भ्रातृभिः सबलानुगैः; G1 M4.7 सभ्रातृसबलानुगः (G1 °गं; M4 °न्वितः); M3 सभ्रातृबलवाहनः. —After 39, Ñ V2 B D1.3.4.6.7.10.11 S ins. :

216* धनदेन परित्यक्तां सुविभक्तमहापथाम् ।

[ G3 damaged up to वि in the post. half. Ñ2 सं- (for सु-). D1.3.4 सुविभक्तां (D3 °क्तस्तु [ sic ]) मनोरमां (for the post. half). ]

—Thereafter, D6.7.10.11 M3.6.7.10 cont. :

217* आरुरोह स देवारिः स्वर्गं देवाधिपो यथा ।

[ M3 वरदृप्तः (for आरुरोह). ]

40 $^{a}$) T2 सह; T3.4 सदा (for तदा). —$^{b}$) V2 निवे *** स (damaged). —$^{c}$) Ś2.3 न कामपूर्णा; D3.4 निकायपूर्णा (for निकामपूर्णा). D1.3 नु; D4 तु (for च). D11 ब ** (for बभूव). D5 राक्षसैः (for सा पुरी).

41 M8 om. 41. —$^{a}$) Ñ V2 B3.4 [ऽ]पि; B1 वै; B2 तां (for तु). B1.2 G2 om.; M1 [अ]पि (for [अ]थ).

## १२

राक्षसेन्द्रोऽभिषिक्तस्तु भ्रातृभ्यां सहितस्तदा ।
ततः प्रदानं राक्षस्या भगिन्याः समचिन्तयत् ॥ १

ददौ तां कालकेयाय दानवेन्द्राय राक्षसीम् ।
स्वसां शूर्पणखां नाम विद्युज्जिह्वाय नामतः ॥ २

अथ दत्त्वा स्वसारं स मृगयां पर्यटन्नृपः ।
तत्रापश्यत्ततो राम मयं नाम दितेः सुतम् ॥ ३

कन्यासहायं तं दृष्ट्वा दशग्रीवो निशाचरः ।
अपृच्छत्को भवानेको निर्मनुष्यमृगे वने ॥ ४

G. 7. 12. 4
B. 7. 12. 4
L. 7. 11. 4

D9 तत् (for स्वथ). Ś D2.5.8.9.12 -नोदितो; V1 -देशितो; V3 -प्रेषितो (for -गौरवात्). —$^{b}$) V2 damaged; G2 चातिविपुले (for शशिविमले). T2 [ऽ]लका- (for गिरौ). Ś V1 D2.5.8.9.12 न्यवेशयत्स्व(D2 निवेशयन्स्व; D5 निवेशयंस्त्व)यमचलोत्तमे पुरीं(Ś1 V1 D2.8.9 °रं); V3 न्यवेशनं त्वं तु चलोत्तमोत्तमं; B1 न्यवेशयत्खे विमले गिरौ पुरीं. —$^{c}$) Ñ1 V2 B1.2 D5 अलंकृतैर्; G2 स्वयंकृतैर्. D5.8 भुवन-; D9 भ * *- (for भवन-). V3 -क्षतैर् (sic) (for -वरैर्). Ś1 B3 D2.8.9 विभूषितं. —$^{d}$) D3 T4 [ए]व; D6 [इ]व हि (for [इ]व). D1.3.4.6 यथा; T3.4 सदा; M1 यदा (for तदा). Ś Ñ V B1.2.4 D2.5.8.9.12 पुरंदरः स्वपुर(B4 °री)मिवामरावतीं; B3 पुरंदरपुरमिव चामरावतीं; D7.10.11 G2 पुरंदरः स्वरिव यथामरावतीं; T1.2 M3 पुरंदरः पुरममरावतीं यथा; M6 पुरा महेंद्रस्त्वमरावतीमिव; M7 पुरंदरो मुदित इवामरावतीं. ❀ Cg : अत्र छन्दोभङ्ग आर्षो ज्ञेयः ।; Ck : अत्र छन्दोभङ्गव्यावृत्तये "पुरंदरस्येव तदामरावतीम्" इति पठनीयम् ।; so also Ct. ❀

Colophon. —After Kāṇḍa name, D2 ins. आभ्युदयिके पर्वणि. —*Sarga name* : Ś V1.3 B1 D1–9.12 रावणाभिषेकः; Ñ1 रावणाभिषेके लंकाध्यासः; Ñ2 रावणलंकाप्रवेशः; V2 B3.4 लंकाप्रवेशः; B2 लंकाध्यासः. —*Sarga no.* (figures, words or both): Ś Ñ1 V3 B1.2.4 D1.2.4.12 om.; V2 damaged; V1 9; D8.9 10. —After colophon, G M1.5.8 conclude with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

## 12

D12 begins with ॐ.

**1** G3 damaged for 1$^{ab}$. —$^{a}$) D5 राक्षसः सो (for राक्षसेन्द्रो). B2 स (for तु). —$^{b}$) Ś V2.3 B D T1.2 M1.2.6–10 भ्रातृभिः (for भ्रातृभ्यां). G1 राक्षसैर्बहुभिर्नतः; G2 M4 राक्षसैर्ब्राह्मणैस्तदा. —$^{d}$) Ś Ñ V B1.2.4 D2.5.8.9.12 T3 सोभ्य(D5 सम)रोचयत्; B3 अभ्यरोचयत्; D1.3.4 सोभ्यचिंतयत्; M6 त्वभ्यरोचयत् (for समचिन्तयत्).

**2** $^{ab}$) D1.3.4 M6 स (for तां). Ś Ñ V B D2.5.8.9.12 T3.4 M3 Cg स्वसारं (for ददौ तां). Ś D2.8.12 M7 राक्षसेंद्राय; Ñ1 B2 D3 कालकेशाय; V1.3 D5.9 T4 दानवेंद्राय; D1.4 कालिकेयाय; D10 कालकेंद्राय; Cg as in text (for कालकेयाय). Ś V1.3 D2.5.8.9.12 कालखं(V1 °कं)जा(D2 °डा)य; T4 कालकंजाय; G1.2 M1 राक्षसेंद्राय; M7 कालकेयाय (for दानवेन्द्राय). T3 transp. कालकेयाय and दानवेन्द्राय. Ś Ñ V2.3 B D1–5.8.9.12 T4 M6.10 राक्षसः; V1 T3 रक्षसे (for राक्षसीम्). —$^{c}$) Ś Ñ V B D2.5.8.9.12 T3.4 M3 ददौ; D1.4 M10 स्वसा (for स्वसां). Ś2 D3.8.12 शूर्पनखां (D3 °खीं); V2 D5 सूर्पणखां; D1.4–6 सूर्पनखीं(D1.4 °खी; D6 °खां); T3 G1.2 M2.4.5.7 शूर्पणखीं; M10 शूर्पणखा (for शूर्पणखां). Ś Ñ2 V2.3 B D2.8.9.12 राजा; Ñ1 राम; D1.3.4 नाम्ना (for नाम). ☞ V2 is missing from 2$^{d}$ up to 7.49. 4$^{a}$. —$^{d}$) G2 M4.7 विद्युत्केशाय. D7.10.11 M4 राक्षसः (for नामतः).

**3** $^{a}$) Ś Ñ1 D2.8.12 M5 तु; B4 तां; D9 T3 च (for स). D6.7.10.11 स्वयं रक्षो; G2 M1.2.4.7–9 स्वसां रक्षो; M6 तु तां रक्षो; M10 [अ]नुजां रक्षो (for स्वसारं स). —$^{b}$) B1.3 वने; T1–3 नृप; T4 अपि (for नृपः). D6.7.10.11 G2 M2.4.5.7–10 अटते स्म सः(D7.10.11 तत्); M1 अगमत्ततः; M6 अटते नृप (for पर्यटन्नृपः). D1.3.4 चचार मृगयां नृपः. —For subst. in V1, cf. v.l. 218*. —$^{c}$) M6 स वै तात (for ततो राम). Ś D2.5.8.9.12 T3.4 अपश्यत्स मयं नाम; Ñ V3 B अपश्यत्स वने तात (B1[m. also].3 राम); D1.3.4 ददर्श तत्र वै राम(D3 तात). ❀ Ck.t : रामेति संबुद्धिः. ❀ —$^{d}$) Ś D2.5.8.9.12 T3.4 वने तात (for मयं नाम). B3 दनोः (for दितेः).

**4** $^{a}$) B3 -सहायतां (for -सहायं तं). M6 दृष्ट्वा तु (for तं दृष्ट्वा). —$^{b}$) G2 M4.5.7 प्रतापवान् (for निशाचरः). —$^{c}$) Ś Ñ V3 B D1–5.8.9.12 T3.4 अ(D2 य)त्र (for एको). —$^{d}$) Ś2.3 B4 G2 निर्मानुष- (for निर्मनुष्य-). —For 3$^{c}$–4, V1 subst.:

218* गत्वा स च वनोद्देशे मयं राक्षसपुंगवम् ।
दद‍र्श कन्यया सार्धं दशग्रीवोऽब्रवीद्वचः ।
कस्त्वं परमया कान्त्या दीप्यसे विजने वने ।

—Then V1 cont.:

219* कथ्यतां पुरुषश्रेष्ठ लब्धेयं कस्य का*तः ।

—After 4, D6.7.10.11 T1.3 M3.4.7.10 ins.:

220* अनया मृगशावाक्ष्या किमर्थं सह तिष्ठसि ।

[D6.7 इह (for सह). M4 किमर्थं संभविष्यसि; M7 यत्र त्वं गंतुमिच्छसि (for the post. half).]

स पथ:; D2 स पथि; D5 सुपथं; D8 स * *; T3 (both times) प्राणिनां; L (ed.) राक्षसः (for समये). V3 शुभान् (for शुभान्). Ś1 स शुभाशुभान् (for समये शुभान्). Ñ1 ददृशे च भयाञ्शुभान्; Ñ2 B पंथानो दृष्टि (B2 दिव्य) दर्शनाः; D3 ददृशे स पथि स्थितान्; T4 (first time) ददर्श स्फुरतः शुभान्; T4 (second time) ददर्श प्राणिनः शुभान् (for the post. half). —After l. 6(r.), T3.4 repeat st. 9.]

—Ñ1 (after 10$^{cd}$ [r.]).2 B D6 T1.2 G M ins. after 10; V1.3 D1-5.9 (D2.5.9 l. 3 and l. 14 only) cont. after l. 1 of 403*; D7.10.11 cont. after 402*; T3.4 ins. l. 1-8 after st. 10, cont. l. 9-14 after 402* and l. 15-19 after 403*:

404* यमस्य पुरुषै रौद्रैर्घोररूपैर्भयानकैः।
दद‍र्श वध्यमानांश्च क्लिश्यमानांश्च देहिनः।
क्रोशतश्च महानादं तीव्रनिष्टनतत्परान्।
कृमिभिर्भक्ष्यमाणांश्च सारमेयैश्च दारुणैः।
श्रोत्रायासकरा वाचो वदतश्च भयावहान्। [5]
संतार्यमाणान्वैतरणीं बहुशः शोणितोदकाम्।
वालुकायां च तप्तायां तप्यमानान्मुहुर्मुहुः।
असिपत्रवने चैव भिद्यमानाननेकशः।
रौरवे क्षारनद्यां च क्षुरधारे तथैव च।
पानीयं याचमानांश्च तृषितान्क्षुधितानपि। [10]
शवभूतान्कृशान्दीनान्विवर्णान्मुक्तमूर्धजान्।
मलपङ्कधरान्श्रान्तान्नग्नांश्च परिधावतः।
ददर्श रावणो मर्त्याञ्शतशोऽथ सहस्रशः।
कांश्चिद्गृहेषु मुख्येषु गीतवादित्रनिस्वनैः।
प्रमोदमानानद्राक्षीद्रावणः सुकृतैः स्वकैः। [15]
गोरसं गोप्रदातारो भोजनं चान्नदायिनः।
गृहांश्च गृहदातारस्तत्र समश्नुते।
सुवर्णमणिमुक्तानां प्रदातॄंश्चाप्यलंकृतान्।
धार्मिकानपरांस्तत्र दीप्यमानान्स्वतेजसा।
ददर्श स महाबाहू रावणो राक्षसाधिपः। [20]

[V3 D1.3.4 om. l. 1-2. Ñ V1 (reading after 404(A)*) B transp. l. 1 and 2.—(l. 1) Ñ V1 B M8 घोरैर्; D10.11 T3.4 उग्रैर् (for रौद्रैर्). Ñ V1 B नैक- (for घोर-). M8 -रूप- (for -रूपैर्). Ñ B1-3 भयंकरैः; B4 G1 भयावहैः (for भयानकैः).—(l. 2) Ñ B स (for first च). Ñ V1 B1.3.4 कृष्यमाणांश्. D6 वेदिनः (for देहिनः). —Ñ B transp. l. 3 and 4. V1 repeats l. 3 after l. 4. D3 repeats l. 3 after l. 3 of 403*. T4 repeats l. 3 after l. 1 of 403*.—(l. 3) Ñ1 मुंचमानान्; D2.5.6.9 क्रोशंतश्च. Ñ V1.3 B D1-5.9 (V1 D3 both times) T4 (second time) G2 M4.6.7 महानादांस्; D6 महानादैस्. D6 T1 तीव्रं; M6 तीव्रान् (for तीव्र-). T2 -वेदन- (for -निष्टन-). M7 -तत्पराः (for -तत्परान्). Ñ B1-3 तीव्रान्निश्वनतो (Ñ2 °न्निश्वसतः; B1 °न्निष्टनतो; B3 °न्निनिष्नतो) परान्; V1 (both times).3 D1-3 (first time).4.5.9 T3.4 (both times) दुःखितैश्च (D1.3.4 °तैस्तु; D5 °तैः स) ततो (V1 [second time] हतान्; V3 तदा; D2 तथा) परान्; B4 तीव्रं निश्वासितोपरान्; D3 (second time) तीव्रं निःस्वनतस्तथा; G1 तीव्रनिष्ठुरतः परान्; M2.5.9 तीव्रनि- (M2 °व्रं नि) ष्टनतः परान् (for the post. half). ❀ Cg.k: तीव्रो निष्टनः क्रूर (Ck कुबेर [?]) शब्दः।; Ct: तीव्रनिष्टनो दुःखितशब्दस्तत्परान्. ❀ —After l. 3, V1.3 D1-3 (after l. 3 [first time]).4.5.9 ins.:

404(A)* निमज्जतः क्षारनद्यां क्षुरधारापथे स्थितान्।

[V3 D2.9 निमज्जंतः. D3 -पथं (for -पथे). V3 D3.4 च तान्; D2 [s]स्थिरात् (for स्थितान्). D1 क्षुरधारामि * प्य तान्; D5 क्षुरधारापथेऽर्चितान्; D9 क्षुरधारपथेरितान् (for the post. half).]

—V3 D1.4 om. l. 4-13.—(l. 4) Ñ1 D6.7 T G2 क्रिमिभिर्; M7 पक्षिभिर् (for कृमिभिर्). Ñ V1 B1-3 भक्ष्यमाणांश्. B4 सु- (for second च).—(l. 5) D6 T1.2 G3 M3 श्रोत्रत्रास- (for श्रोत्रायास-). Ñ B1.2.4 T1.3.4 M3 -करीर्वाचः; B3 -करैर्वाचः (for -करा वाचो). D3 G1.2 M2.5.7.9.10 नद (M10 °दं) तश्; M4 नदंतश्; M6 वदतां; M8 ददतश् (for वदतश्). D3.7.10.11 G2 T4 M2.3.10 भयावहाः; D6 महाभयान्; T2 भयाव * (damaged after व up to बहुशः in l. 6); T3 भयानकाः. Ñ B शुश्राव (B4 [before corr.] °श्रुवे) नदतां (B2 °तः) कचित् (for the post. half). V1 तेषां भयकरीर्वाचः शुश्राव वदतां कचित्.—Ñ V1 B read l. 6-7 after l. 1 (transp.). —(l. 6) Prior half hypm. Ñ1 तारार्यमाणान्; Ñ2 V1 B D3 M3.6 तार्यमाणान्; Cg.k.t as above (for संतार्य°). G3 वैतरणिं. Ñ B4 प्रापि (Ñ1 B4 पायि) तान्ज्वलितं वपुः (Ñ2 पुरं); V1 याचितान्ज्वलितानपि; B1 पातितान्कथितं वपुः; B2 पातितान्बहुशस्तथा; B3 पातितान्कथितानपि; D3 M6 पिबतः शोणितोदकं (for the post. half). ❀ Cg.k.t: संतार्यमाणान्वैतरणीमिति संज्ञापदवशात्पादाक्षराधिक्यम् (Ct °णीमित्यक्षराधिक्यमार्षम्). ❀ —(l. 7) V1 M4 सु- (for च). D6.7.10.11 वालुकासु च तप्तासु (for the prior half). Ñ V1 B1.3.4 कृष्यमाणान्; B2 क्लिश्यमानान् (for तप्यमानान्).—(l. 8) Ñ1 B2 -वने घोरे; Ñ2 V1 B1.3.4 -वनेप्वथ्च (for -वने चैव). Ñ2 V1 B D3 छिद्यमानान्. Ñ V1 B D3.6.7.10.11 M6 अधार्मिकान् (for अनेकशः).—V1 om. l. 9. —(l. 9) T2 क्षुरधारैस्. Ñ B D3 M6 च दारुणे (for तथैव च). D6.7.10.11 T4 क्षुरधारासु चैव हि (for the post. half).—G2 M10 om. l. 10-13.—(l. 10) Ñ1 याचमानाय. Ñ V1 B क्षुधितान्कचित्; T1.2 च बुभुक्षितान्; T3 क्षुधिताशनः (for क्षुधितानपि). G1 M1.5 transp. तृषितान् and क्षुधितान्.—(l. 11) Ñ1 वश- (meta.); B1 सर्व-; B3 स च (for शव-). B4 क्षतान् (for कृशान्). M1 विकीर्णान् (for विवर्णान्).—Ñ1 om. l. 12-15. —(l. 12) Ñ2 V1 B D3 G1 M4-7 रूक्षान्; D6.7.10.11 दीनान्; T1 भ्रांतान्; T3 भग्नान्; T4 नग्नान्; G3 दांतान्; M2.9 शांतान् (for श्रान्तान्). Ñ2 V1 B2.3 T1 भग्नांश्; D6.7.10.11 T3.4 रूक्षांश्; G1 M1.9 अन्यांश्; G (ed.) लग्नांश् (for नग्नांश्). M6 परिधा-

G. 7. 25. 22
B. 7. 21. 21
L. 7. 24. 14

ततस्तान्वध्यमानांस्तु कर्मभिर्दुष्कृतैः स्वकैः ।
रावणो मोचयामास विक्रमेण बलाद्बली ॥ ११
प्रेतेषु मुच्यमानेषु राक्षसेन बलीयसा ।
प्रेतगोपाः सुसंरब्धा राक्षसेन्द्रमभिद्रवन् ॥ १२
ते प्रासैः परिघैः शूलैर्मुद्गरैः शक्तितोमरैः ।
पुष्पकं समवर्षन्त शूराः शतसहस्रशः ॥ १३

वितान्. —D3 om. l. 13. —(l. 13) D6.7.10.11 मार्गे (for मर्त्यान्). —D3 reads l. 14 after 404(A)*. —(l. 14) D2.5.9 T3.4 कच्चिद् (for कांश्चिद्). B4 गेहेषु; D3 ह्रदेषु; D6.7.10.11 M1 च; M1 om. [subm.]) गृह-; T1.2 G3 M3.5 विमान- (for गृहेषु). V1.3 वन्येषु; B4 पुण्येषु; D1-4.9 T3.4 रम्येषु; D5 मृक्षेषु (sic); G2 M10 वीणादि- (for मुख्येषु). B1 कांश्चित्सुखे स्वभवने (for the prior half). D2.3.5-7.9-11 -निःस्वनैः. —V1 om. l. 15-20. D1.3.4 om. l. 15. —(l. 15) B2 प्रमोद्यमानान्; T4 आमोदमानान्. Ñ2 V3 B1.2.4 प्राणिनः; B3 प्राशिनः (for रावणः). G2 स्वकृतैः. —Ñ1 reads from l. 16 up to 404(B)* in marg. D3 reads l. 16-17 after l. 20. —(l. 16) M8 गोरसान्. Ñ2 V3 B M6 -दातृंश्च (for -दातारो). Ñ2 V3 B D7.10.11 K (ed.) अ(K [ed.] ह्य)न्नं चैव; M6 अन्नपांश्च (for भोजनं च). D1.4 चाज्य-; D3 याच्य-; M9 चानु- (for चान्न-). B1 -दायिनं. M1 -दायकाः (for -दायिनः). Ñ1 अन्यांश्चैव प्रदायिनः (for the post. half). —After l. 16, Ñ1 (marg.) ins.:

404(B)* तत्र तत्रायतुङ्गानां वृक्षादिगुणसंयुताम् ।

—Ñ1 cont.; Ñ2 V3 B M6 ins. after l. 16:

404(C)* तत्र तत्रोपभुञ्जानान्वर्णादिगुणसंयुतान् ।

[M6 om. (hapl.) first तत्र. Ñ1 [अ]वजानानां; Ñ2 B4 [अ]पि भुंजानान्; B1 [उ]पयुंजानान्; B3 [उ]पयुक्तानान् (sic) (for [उ]पभुञ्जानान्). B2 वर्णानि; B3 भक्षादि- (for वर्णादि-). M6 गंधमाल्यैश्च शोभितान् (for the post. half).]

—B3 om. l. 17. —(l. 17) D1.3.4 गृहाणि (for गृहांश्च). T4 -कर्तारस् (for -दातारस्). D6.7.10.11 स्वकर्मफलमश्नतः; M3 [ऽ]श्नुवते तत्र तत्र ह (for the post. half). ❀ Ct: गृहदातारो गृहदातॄन्। अश्नत उपभुञ्जानान्. ❀ —For l. 17, Ñ V3 B1.2.4 M6 subst.:

404(D)* वस्त्रदान्वस्त्रसंछन्नान्गृहदांश्च गृहे स्थितान् ।

[V3 B3 -संवीतान्; M6 -संपन्नान् (for -संछन्नान्). Ñ1 B1 गृह- (for गृहे).]

—D1.4 om. l. 18-20. V3 om. l. 18. —(l. 18) B2 -मुक्तादि-; D6.7.10.11 -मुक्ताभिः (for -मुक्तानां). G1 सुवर्णमुक्तारत्नानां (for the prior half). G1 प्रदातॄणां (for प्रदातॄंश्च). D6.7.10.11 प्रमदाभिर् (for प्रदातॄंश्चापि). D6 अलंकृताः (for [अ]लंकृतान्). Ñ B1.3 M9 [अ]भ्यलंकृतान; B2 (with hiatus) अलंकृतान्; T3 G1 स्वलंकृतान; G3 ह्यलंकृतान् (for [अ]प्यलंकृतान्). —(l. 19) T4 स्वपरांस् (for अपरांस्). Ñ V3 B M6 धार्मिकांश्च (B2 °स्तु) नरांस्तत्र; D3 प्रायशश्च नरांस्तत्र; T2 धार्मिकांश्चापरांस्तत्र (for the prior half). D7 च (for स्व-).

—Ñ V3 B D11 T3.4 om. l. 20. —(l. 20) G1.2 M10 सुमहाबाहू (G2 M10 °तेजा) (for स महाबाहू).]

11 a) M6 च (for तु). Ñ2 B बध्यमानांस्तु (Ñ2 °श्च); D6.7.10.11 Ct भिद्यमानांश्च; Ctp as in text (for वध्यमानांस्तु). Ś V3 D1-5.8.9.12 ततो यास्तत्र (V3 °स्य) वध्यं (Ś8 वधं; D1.4 बाध्यं) ते; Ñ1 ततस्ते यत्र वध्यंते; V1 T3.4 ततस्ता यत्र व(T3 बा)ध्यंते. —b) Ñ1 दुष्कृतो. Ñ2 B प्राणिनः कर्मभिः; M1 दुष्कृतैः कर्मभिः (by transp.) (for कर्मभिर्दुष्कृतैः). Ś V1.3 D1-5.8.9.12 T3.4 प्रजाः; Ñ1 नराः (for स्वकैः). —c) Ś V1 D2.3.5.8.9.12 ता रक्षो; Ñ1 D1.4 T3.4 तान्रक्षो (for रावणो). Ś Ñ2 V3 B D1-4.8.9.12 M6 मोक्षयामास. —d) Ñ B M6 महाबलः (for बलाद्बली). —After 11, Ñ V1 B D3.6.7.10.11 S ins.:

405* प्राणिनो मोक्षितास्तेन दशग्रीवेण रक्षसा ।
सुखमापुर्मुहूर्तं ते ह्यतर्कितमचिन्तितम् ।

[(l. 1) D3 बलेन (for प्राणिनो). T1.2 G1.3 M1.3 मोच्चितास्. Ñ1 V1 B3 तेथ; D3 तत्र; T3.4 M9 ते तु (for तेन). ❀ Cv: प्राणिनो मोक्षितास्तेनेति पाठः. ❀ —(l. 2) B4 सुखमीयुर्; D3 सुखं मुहुर्; D6 सुखमायुर् (for सुखमापुर्). Ñ1 तु; Ñ2 V1 B1.2.4 तद् (for ते). V1 B1.2.4 G1 (with hiatus) अतर्कितम्. Ñ2 अचिंतितमतर्कितं; D3 ह्यप्रतर्कितमागतं; T3.4 ह्यचिंतितमतर्कितं (for the post. half). ❀ Cv: अतर्कितमाकस्मिकम्।; Ct: अचिन्तितमित्यतर्कितमित्यस्यैव विवरणम्. ❀]

12 a) D3 मोक्ष्यमाणेषु. —b) T1 रावणेन (for राक्षसेन). D7.10.11 T1.4 महीयसा (for बलीयसा). —c) B2 (marg. also) तस्यामात्याः (for प्रेतगोपाः). Ñ1 D6.7.10.11 T4 G1.2 M1.3-5.7.10 सुसंक्रुद्धा; B3 स्वयं बद्धा (for सुसंरब्धा). ❀ Ct: प्रेतगोपाः प्रेतरक्षकाः. ❀ —d) Ñ V1 B उपाद्रवन्; D3 M6.7 ह्यभिद्रुताः. —For 12, Ś V3 D1.2.4.5.8.9.12 subst.; while Ñ1(marg.).2 V1 B D3.7.10.11 T3.4 M3 ins. after 12:

406* ततो हलहलाशब्दः सर्वदिग्भ्यः समुत्थितः ।
धर्मराजस्य योधानां शूराणां संप्रधावताम् ।

[(l. 1) D5 कोलाहलः (for हलहला-). Ñ B कृतैर्हलहलाशब्दैः सर्वमाविद्धमाबभौ. —(l. 2) Ñ2 B1.3 शूराणां योधानां (by transp.). M3 परिधावतां (for संप्रधावताम्).]

—Thereafter, D5 cont. l. 2 of 407*.

13 a) Ś D8.12 प्रासैश्च; V1 ते पाशैः; D5 ते प्रास- (for ते प्रासैः). T3.4 पट्टिसैः (T4 °शैः) (for परिघैः). —b) Ś V1.3 D1-5.8.9.12 T3 तोमरैः; Ñ1 B1.3 D6.7.10.11 मुसलैः; T4 सूमरैः- (for मुद्गरैः). Ś V1.3 D1-4.8.9.12 T3.4 -मुद्गरैः; D5 -कंपनैः (for -तोमरैः). —c) G2 M5.10 पुष्पके. D5.6

तस्यासनानि प्रासादान्वेदिकास्तोरणानि च ।
पुष्पकस्य बभञ्जुस्ते शीघ्रं मधुकरा इव ॥ १४
देवनिष्ठानभूतं तद्विमानं पुष्पकं मृधे ।
भज्यमानं तथैवासीदक्षयं ब्रह्मतेजसा ॥ १५

ततस्ते रावणामात्या यथाकामं यथाबलम् ।
अयुध्यन्त महावीर्याः स च राजा दशाननः ॥ १६
ते तु शोणितदिग्धाङ्गाः सर्वशस्त्रसमाहताः ।
अमात्या राक्षसेन्द्रस्य चक्रुरायोधनं महत् ॥ १७

G. 7. 23. 31
B. 7. 21. 31
L. 7. 24. 22

T1.4 G3 M1 समवर्तत; D7.10.11 समभर्षत; D12 समवर्षंतु (for समवर्षन्त). G1 पुष्पकस्यमवर्षत. —After 13, Ś Ñ V1.3 B D1-5.8.9.12 T3.4 M3 ins.; D6.7.10.11 ins. after 15; M10 ins. after 18 :

407* असंख्येयं यमस्यासीत्तत्र सैन्यं महात्मनः ।
शूराणामुग्रवीर्याणां संयुगेष्वनिवर्तिनाम् ।

[ (l. 1) V3 असंख्यातं; D5 असंक्षेयं. Ñ1 यमस्य रक्षः सुमहत्; Ñ2 B असंख्यमासीत्सुमहत्( B4 °त्संवृत्तं ); D6.7.10.11 M10 असंख्या सुमहत्यासीत् ( for the prior half ). Ñ B1-3 D5-7.10.11 M10 तस्य; B4 तथा ( for तत्र ). D6.7.10.11 M10 सेना ( for सैन्यं ). B3 महास्वनः( sic ) ( for महात्मनः ). —D5 cont. l. 2 after 406*. —( l. 2 ) D5 वीराणाम् . Ś1 D8.9.12 उपवीर्याणां; Ś2.3 D2 अतिवीर्याणां; D6.7.10.11 M10 अग्रयातृणां ( for उग्रवीर्याणां ). D5 संग्रामेषु; M3 समरेषु. D8 अनिवर्तते ( sic ) ( for [ अ ]निवर्तिनां ). D6.7.10.11 M10 सहस्राणि शतानि च ( for the post. half ). ]

14 ᵃ) T1.2 G3 M1 प्राकारान् ; G1 प्रासादं ( for प्रासादान् ). —ᵇ) D6 M4 -[ आ ]स्तरणानि ( for तोरणानि ). —For 14ᵃᵇ, Ś Ñ V1.3 B D1-5( reading after l. 1 of 407* ).8.9.12 T3.4 subst.; while D6.7.10.11 M3.10 cont. after 407* :

408* ततो वृक्षांश्च शैलांश्च प्रासादानासनानि च ।

[ D6.7.10.11 T4 M10 वृक्षैश् ( for वृक्षांश् ) and शैलैश् ( for शैलांश् ). B1 transp. वृक्षांश् and शैलांश् . D1.4 प्रासादानि. Ñ2 सदनानि च; D5 आयुधानपि ( for आसनानि च ). Ś D2.8.9.12 प्रासादी( D2.8 °दा )न्यायुधानि च; B3 T3.4 M3 प्रासादानां( M3 °दीनां ) शतानि च; D6.7 M10 प्रासानां च शतैस्तथा; D10.11 प्रासादानां शतैस्तथा ( for the post. half ). ]

—M3 further cont. :

409* पुष्पकं समवर्षन्त यमदूता भयानकाः । ;
[ prior half = 13ᶜ. ]

while M10 further cont. after 408* :

410* ततोऽभवत्समं युद्धं यमराक्षसयोस्तथा ।
विजयाकाङ्क्षिणोस्तत्र समरेष्वनिवर्तिनोः ।
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
प्रजापतिं पुरस्कृत्य ददृशुस्ते रणाजिरम् ।
संवर्त इव लोकानामभवद्युध्यतोस्तयोः । [ 5 ]
राक्षसानां च मुख्यस्य प्रजानामीश्वरस्य च ।
राक्षसेन्द्रस्ततः क्रुद्धश्चापमानम्य संयुगे ।
निरन्तरमिवाकाशं कुर्वन्बाणान्मुमोच ह ।
चतुर्भिर्विशिखैः सूतं ध्वजं सप्तभिरर्दयत् ।

—Thereafter M10 repeats 18ᶜᵈ.

—ᶜ) Ś D8.9.12 पुष्पके समसज्जंत. —ᵈ) Ś2.3 D2.3.5.9.12 T3.4 M6 द्रविद्राः; D1.4 तीव्राः; D6 T2 पुष्पं. T3.4 करि- ( for मधु- ). Ñ B पुष्पाणि मधुपा इव. —After 14, Ś2.3 Ñ1 V1.3 D1-5.9.12 T3.4 ins.; M3 cont. after 409* :

411* समन्ताद्विद्रुतं तैस्तु पुष्पकं यानमाबभौ ।
यथा स्वर्णमयं शृङ्गं समन्ताद्विद्रुतं घनैः ।

[ ( l. 1 ) V3 समंतोभिद्रुतं; D1-4 समंताभिद्रुतं; D5 समंताद्वै द्रुतं; T3 समंतादावृतं ( for समन्ताद्विद्रुतं ). D2 T4 यैस् ( for तैस् ). D5 आहवे ( for आबभौ ). Ś2.3 D12 आयुधैः पूर्यमाण तु यानं पुष्पकमाबभौ. —( l. 2 ) Ñ1 दिव्यं ( for शृङ्गं ). D5 विश्रुतं; T3 आवृतं ( for विद्रुतं ). Ś2.3 D3.4.12 समंताभिद्रुतैर्व( D3.4 °तं घ )नैः; D1.2 समंताभिद्रुतं जनैः( D1 नवैः ) ( for the post. half ). ]

15 ᵃ) Ś1.2 D1.8.9.12 दैव- ( for देव- ). Ś Ñ V1.3 B1.3.4 D1-5.8.9.12 T3.4 M6 -निर्माण-; B3 -निर्मित-; Ct as in text ( for -निष्ठान- ). D6.7 G2 M2.5.9.10 देवाधिष्ठान-; T1 G3 M1.3 देवतास्थान-; G1 किंकरैरभि-; M8 देवानुष्ठान- ( for देवनिर्माण- ). Ś Ñ V1.3 B1-3 D2.5.8.12 T3 G1 M6 -भूतं तु ( Ś2.3 G1 M6 तं; B3 हि ); D1.3.4 -भूतत्वाद्; D9 ( with hiatus ) अभूत्तु ( for -भूतं तद् ). ❀ Ct : देवनिष्ठानभूतं देवाधिष्ठानभूतम्. ❀ —ᵇ) Ś V3 D2.8.9.12 तथा; Ñ1 V1 कृतं; Ñ2 B D1.3-5 T3.4 तदा ( for मृधे ). —ᶜ) Ś D8.12 पूर्यमाणं; D5 भ्राजमानं; D9 पूज्यमानं; T4 वध्यमानं ( for भज्यमानं ). Ñ2 तदेवाभूद् ; B1.3.4 तथैवाभूद् ; B2 तदेवाभूद् ( for तथैवासीद् ). —After 15, D6.7.10.11 ins. 407*.

16 ᵃ) Ś Ñ V1.3 B D T3.4 M6 सचिवास्तस्य( D3 °स्तत्र ) ( for रावणामात्या ). —ᵇ) B2.4 T1.2 G1.3 M4.5.7 यथाकालं; G2 यथालोकं ( for यथाकामं ). —After 16ᵃᵇ, B2 ins. :

412* निर्गम्य सहसा तत्र युद्धाय कृतनिश्चयाः ।

—ᶜ) D10.11 आयुध्यंत; G2 अयुध्यत. D6.7.10.11 T1.2 M3 महावीराः; T4 तथा वीराः; G1 महावीर्यैः. —ᵈ) G1 राजन् . —For 16ᶜᵈ, Ś Ñ V1.3 B D1-5.8.9.12 T3 subst. :

413* अयुध्यन्त महाबाहो दशग्रीवस्य रक्षसः ।

[ D4.8 आयुध्यंत. D9 यथान्यायं ( for महाबाहो ). B4 रक्षसा. ]

17 ᵃ) Ś B1 D8.12 च ( for तु ). D2.9 तेन ( for ते

G. 7.25.32
B. 7.21.31
L. 7.24.23

अन्योन्यं च महाभागा जघ्नुः प्रहरणैर्युधि ।
यमस्य च महत्सैन्यं राक्षसस्य च मन्त्रिणः ॥ १८
अमात्यांस्तांस्तु संत्यज्य राक्षसस्य महौजसः ।
तमेव समधावन्त शूलवर्षैर्दशाननम् ॥ १९
ततः शोणितदिग्धाङ्गः प्रहारैर्जर्जरीकृतः ।
विमाने राक्षसश्रेष्ठः फुल्लाशोक इवाबभौ ॥ २०
स शूलानि गदाः प्रासाञ्शक्तितोमरसायकान् ।
मुसलानि शिलावृक्षान्मुमोचास्त्रबलाद्बली ॥ २१
तांस्तु सर्वान्समाक्षिप्य तदस्त्रमपहत्य च ।
जघ्नुस्ते राक्षसं घोरमेकं शतसहस्रशः ॥ २२

तु). G1 -मांसाद्दाः(sic) (for -दिग्धाङ्गः). —[b]) G1.2 M4.5.7 सर्वे (for सर्व-). Ś2 B3 -शास्त्र-. Ś V1.3 D2.8.9.12 T3 -निराकृताः; Ñ B -विशारदाः; D1.3.4 -निकृंतनाः; D5 निरीक्षताः; D6 -समाहिताः (for -समाहताः).

18 [a]) Ś Ñ V1.3 B D T3.4 M5.6 ते (for च). Ś Ñ1 B1-3 D1.3.4.8.9.12 T3.4 महावेगाः; Ñ2 महायोधाः; V1.3 महातेजाः; D5 महानागाः; G2 M3 महाभागः; M1.2.8 महावीर्याः (M1 °र्य) (for महाभागा). —[b]) Ñ2 घ्नंतः; D12 हताः (for जघ्नुः). D2 प्राहरणैर् (for प्रहरणैर्). Ś Ñ V1.3 B D T3.4 M6 भृशं (for युधि). Ś1 D8 नानाप्रहरणा भृशं; Ś2.3 हताः प्राणहरैर्भृशं. —M10 repeats 18[cd] after 410*. —[c]) Ś V3 D1-5.8.9.12 महात्मानो; Ñ B G1 M6 महासैन्यं; V1 D6.7.10.11 T3.4 महाबाहो; M10 (second time) G (ed.) महासेना (for महत्सैन्यं). —[d]) Ś1 D6-8.10.11 T4 G1 रावणस्य (for राक्षसस्य). —M9 om. (hapl.) from च up to राक्षसस्य in 19[b]. B3 राक्षसेंद्रस्य (for राक्षसस्य च). —After 18, M10 ins. 407* (followed by 408* and 410*).

19 M9 om. up to राक्षसस्य in 19[b] (cf. v.l. 18). —[a]) V3 संपूज्य; B2 संत्याज्य (for संत्यज्य). —[b]) Ś V1.3 D T3.4 यमयोधा महाबलाः (Ś1 V3 D8 °जवाः; D5 °बलान्); Ñ B यमस्यानुचरास्तथा (Ñ2 B1.3.4 °दा); M5.10 राक्षसस्य रिपोर्बलं. —[c]) Ś V3 D2.8.9.12 पर्यधावंत (D2.9 °तः); Ñ2 B समवर्षत; D6.7.10.11 G2 चाभ्यधावंत (G2 °तः); T2 G3 समधावंतः; M3.5 तेभ्यधावंत (M5 °तः); M6 समधावंस्ते (for समधावन्त). Ñ1 V1 T3 तमेकमभ्य (V1 °भ्य)धावंत; G1 ते तमेवाभ्यधावंत; M10 तमेवमभिधावंतः. —[d]) D6.7 -पट्टैर; M7 -चंपैर (for -वर्षैर). V3 महाबलं (for दशाननम्).

20 V3 om. (hapl.) 20. —[a]) D2 -दिग्धांगैः; D8 -दिग्धांगाः. —[b]) Ś V1 D1-5.8.9.12 G2 M7 जर्जरच्छविः; D7 G1 M1.2.8-10 झ (G1 ज) र्झरीकृतः; T1.2 G3 M4.5 ज (T2 M4.5 झ) र्झरच्छविः; T3 रुधिरच्छविः (for जर्जरीकृतः). —[d]) M6 पुष्पाशोक (for फुल्लाशोक). —For 20[cd], Ś Ñ V1 B D T3.4 M10 subst.:

414* फुल्लाशोक इवाभाति पुष्पके राक्षसेश्वरः ।

[Ñ B इवारा (B4 °भा) जन् (Ñ2 B4 °जद्) (for इवाभाति) and विमाने (for पुष्पके). Ñ2 B2-4 D6.7.10.11 T4 M10 राक्षसाधिपः.]

21 [a]) D6.7.10.11 T4 M10 स तु शूल-; T1.2 M3.5 स शूलासि- (for स शूलानि). D6.7.10.11 T1.2.4 M3.10 -गदा-; M6 गदां. —[c]) D6.7.10.11 M10 मुमोच च; T3 शरान्बाणान् (for मुसलानि). M8 -वर्षान् (for -वृक्षान्). —[d]) D6 T1.2.4 G3 [अ]स्त्रं; G1 [अ]स्त्रान्; M1 स (for [अ]स्त्र-). T3 चिक्षेपाशु (for मुमोचास्त्र-). —For 21, Ś Ñ V1.3 B D1-5.8.9.12 subst.; while T3 subst. l. 1 only for 21[ab]:

415* ततः शूलगदाप्रासान्राक्षसो विविधान्सृजन् ।
नगान्बाणांश्च वृक्षांश्च चिक्षेप कार्मुकच्युतान् ।

[(l. 1) B D1.3-5 T3 शूलान् (for शूल-). V1 D1.3.4 T3 आयसान्; V3 om. (for राक्षसो). Ś1 विविधानायुधान्सृजन्; Ñ B3 आयुधा (Ñ2 सायका) न्विविधाञ्शि (B3 °न्स्त्रि) तान्; B1.2.4 आयसान्विविधान्स्त्रि (B2 °धाचि B4 °धांचि) तान् (for the post. half). —(l. 2) D2.3 नागान्; D8 उरगान् (hypm.). Ñ B D1.3-5 शिलावृक्षान्; V1 तथा शैलान्; V3 D9 शिलाश्चैव (for च वृक्षांश्च). D3 चिक्षिपे. D9 कार्मुकाच्. Ñ1 बाणांश्च कार्मुकविच्युतान् (hypm.); Ñ2 B2.3 क्षिपन्कार्मुकविच्यु (B3 °निस्) तान्; V1 B4 अक्षिपत्कार्मुकच्युतान्; B1 क्षिपत्सुकार्मुकाच्च्युतान् (for the post. half).]

—After 21, D6.7.10.11 S ins.:

416* तरूणां च शिलानां च शस्त्राणां चैव दारुणम् ।
यमसैन्येषु तद्वर्षं पपातातिभयंकरम् ।

[(l. 1) T3 वृक्षाणां (for शस्त्राणां). D6.7.10.11 T4 G1 M5 [अ]ति-; T3 M2.4.6.7.9 [अ]पि (for [ए]व). M8 विदारणं (for [ए]व दारुणम्). —(l. 2) G2 M5.10 च (for [अ]ति-). D6.7.10.11 Ct धरणीतले (for [अ]तिभयंकरम्).]

22 D4 repeats 22 consecutively. —[a]) D6.7.10.11 विनिर्भिद्य; T4 M10 विनिर्जित्य; M5 om.; M6 व्यवक्षिप्य (for समाक्षिप्य). Ś Ñ V1.3 B1.4 D1-4 (both times).5.8.9.12 T3 तानि (Ś2 तांस्तु; D4 [second time] om.) सर्वाण्ययवा (Ñ1 °व; Ñ2 V1 °थि) क्षिप्य; B2.3 तानि सर्वाणि विक्षिप्य. —[b]) Ñ1 D6.7 व्यवहत्य; Ñ2 B4 व्यवहत्य; V1 T4 M5.6.10 अभिह (M10 °पा) त्य; B1 व्यवहत्य; B2 व्यवहन्य; B3 प्रनिहन्य; D2 अपहन्य; D5 उपहन्य; M1 उपहत्य; M8 अपगृह्य; Cg.k.t as in text (for अपहत्य). V3 तु (for च). Ś D8.12 तचास्त्रमु (Ś2.3 D12 °म) पकृत्य च. —Ñ2 B om. 22[c]-23[b]. —[c]) Ś Ñ1 V1.3 D1-4 (both times).5.8.9.12 T3 तद्रक्षो रुषितं (Ñ1 V1.3 D5 °ता) जघ्नुर्. —[d]) Ś Ñ1 V1.3 D2.9.12 एकं तं (Ñ1 V1.3 D2.9.12 ते) वै; D1.4 (both

परिवार्य च तं सर्वे शैलं मेघोत्करा इव ।
भिन्दिपालैश्च शूलैश्च निरुच्छ्वासमकारयन् ॥ २३
विमुक्तकवचः क्रुद्धो सिक्तः शोणितविस्रवैः ।
स पुष्पकं परित्यज्य पृथिव्यामवतिष्ठत ॥ २४
ततः स कार्मुकी बाणी पृथिव्यां राक्षसाधिपः ।
लब्धसंज्ञो मुहूर्तेन क्रुद्धस्तस्थौ यथान्तकः ॥ २५
ततः पाशुपतं दिव्यमस्त्रं संधाय कार्मुके ।
तिष्ठ तिष्ठेति तानुक्त्वा तच्चापं व्यपकर्षत ॥ २६
ज्वालामाली स तु शरः क्रव्यादानुगतो रणे ।
मुक्तो गुल्मान्द्रुमांश्चैव भस्म कृत्वा प्रधावति ॥ २७

G. 7. 25. 42
B. 7. 21. 43
L. 7. 24. 32

times). 5 एकांते वै; D8 एकं तं चैव (hypm.); T3 एकमेव; G2 एकैकं च (for एकं शत-). D3 समंतात्सर्वतो दिशः; M10 एकादशसहस्रकं.

23 Ñ2 B om. 23^ab (cf. v.l. 22). —^a) D4.8 परिचार्य. V1 च तत्; D1.4 M10 च ते; D3 तु ते (for च तं). Ś1 D8 रक्षः (for सर्वे). —^b) Ś D2.3.8.9.12 मेघाकरा; Ñ1 V1.3 मेघरवा; D1.4 मेघाः करैः; M6 वर्षोत्तरा (for मेघोत्करा). —^c) Ñ V1.3 B D1.3–6 T1 M7 भिंदिपा( D1.3–5 °डिमा; T1 °डिवा )लैश्च. Ś D8.12 शक्तिभिर्भिंडिपालैश्च. —^d) Ś1 V1 D1.2.4.6–8.10.11 T3 M5.10 Ct अपोथयन्; Ś2.3 D3.5.9.12 अयोधयन्; Ñ B1.2.4 प्रचक्रिरे; V3 अकारयन्; B3 च चक्रिरे; T4 अताडयन्; G2 असायकन् (sic) (for अकारयन्).

24 ^b) Ś Ñ V1.3 B D1–5.8.9.12 T3 M3 मत्तः; M4 स्निग्धः; M7 om. (for सिक्तः). Ś1 D1.4.8 -विद्रुवैः; M2.8.9 -निस्रवैः (for -विस्रवैः). —^c) M5 परित्यक्त्वा. D6.7.10.11 M10 ततः स( M10 °तश्च ) पुष्पकं त्यक्त्वा. —^d) G1 M2.6.8 एव तिष्ठति; G2 अभिविष्ठत; M10 अवतिष्ठति (for अवतिष्ठत). —For 24^cd, Ś Ñ V1.3 B D1–5.8.9.12 T3.4 subst.:

417* त्यक्त्वा तत्पुष्पकं वीरः पृथिवीं समतिष्ठत ।

[ Ñ B संत्यज्य; V3 ततस्तु; D5 संत्यक्त्वा; T3 मुक्त्वा तत् (for त्यक्त्वा तत्). T3 शूरः (for वीरः). V1.3 D1.3–5 T3.4 पृथिव्यां. V3 D5 अवतिष्ठत. Ñ B पृथिव्या( B2 °वी )मेव धिष्ठि( B3 चेष्टि )तः (for the post. half).]

25 ^a) Ś D8.12 गतः सः; Ñ B2.4 तत्रस्थः( Ñ1 ° स्थं ); B3 ततस्तु (for ततः स). Ś2.3 D9.12 -कार्मुक-; V1 रावणः; D2 कार्मुकान्; D3.5 -कार्मुको (for कार्मुकी). Ś2.3 D2.9.12 -बाणान्; V1 सधनू (hypm.); D1.4 बाणं; L (ed.) -बाणो (for बाणी). T3.4 ततः सबाणकोदंडो. —^b) G2 M5.10 राक्षसेश्वरः. Ś V1.3 D1–5.8.9.12 T3.4 राक्षसेंद्रो महाबलः( D2 °लान् ); Ñ B क्रोधसंरक्तलोचनः; D6.7.10.11 समरे चाभिवर्ध( D6 °र्तं )त. —^c) D5 सहसंज्ञो. V3 मुहूर्तं तु (for मुहूर्तेन). —^d) T2 यदा; G3 इव (for यथा). Ś Ñ1 V1.3 D1–5.8.9.12 T3.4 तस्थौ( D1.4 बभौ; T3 रक्षः ) क्रुद्ध इवांतकः.

26 ^a) Ś D8.12 तथा (for ततः). —^b) M10 स तं (for अस्त्रं). Ś2.3 संधार्य. —^c) G1 चापि (for तान्). M6 स्यतिष्ठध्वमथेत्युक्त्वा. —^d) T4 M3 विचकर्ष सः; M5.6 समकर्षत (for व्यपकर्षत). —For 26^cd, Ś Ñ V1.3 B D1–5.8.9.12 T3 subst.:

418* इदानीं तिष्ठतेत्युक्त्वा तच्चापं विचकर्ष सः ।

[ Ñ2 B इ (for सः). ]

—Thereafter Ñ V1.3 B D3 T3 cont.; while D6.7.10.11 T1.2.4 G M ins. after 26:

419* आकर्णं स विकृष्याथ चापमिन्द्रारिराहवे ।
मुमोच तं शरं क्रुद्धस्त्रिपुरे शंकरो यथा ।
तस्य रूपं शरस्यासीत्सधूमज्वालमण्डलम् ।
वनं दहिष्यतो ग्रीष्मे एधितस्येव शुष्मणः ।

[ D3 om. l. 1. —(l. 1) Ñ V1.3 B1–3 D6.7.10.11 T G1.3 M1.2.4–10 आकर्णात्; B4 आकर्णः (for आकर्णं). G1 इ कृष्याथ. V1.3 इंद्र इवाहवे (for इन्द्रारिराहवे). —(l. 2) Ñ1 मुमोचाथ. D3 तुसंक्रुद्धस् (for शरं क्रुद्धस्). M8 त्रिपुरान्. —(l. 3) M1 तच्छरीरं (for तस्य रूपं). G1.2 M3–5.7.10 विधूम- (for सधूम-). —(l. 4) Note hiatus between the two halves. D6.7.10.11 T3.4 G1.2 M2.5.6–10 घर्मे; M4.7 वहेद् (for ग्रीष्मे). T2 मेधितस्येव; M3 ज्वलितस्येव. G3 M1 शुष्मिणः. D6.7.10.11 M5 दा( M5 द )वाग्ने( D6 °ग्नि )रिव मूर्छि( D11 °र्छं )तः; T3.4 M2.7.9 वनजस्येव वह्निषः( T4 M2.9 वह्निनः; M7 घर्मगे ); G1 दहनस्येव वह्निनः; G2 M10 दावस्येव च वह्निनः; M4.8 दह( M4 वद )नस्येव वह्निना; M6 पावकस्येव भास्वतः (for the post. half). —For l. 4, Ñ V1.3 B D3 subst.:

419(A)* वनं दिधक्षतः शुष्कमिद्धस्येव विभावसोः ।

[ D3 दिधक्षंत. B1 तत्र; D3 शून्यम् (for शुष्कम्). B1 स्निग्धस्य (for इद्धस्य). ]

27 ^a) B2 T1.2 G3 ज्वालामाला- (B2 °लस्); M8 ज्वालालीढः; Cg ज्वालामाली (as in text). D5 शिरः; D10 marg. (for शरः). Ś2.3 Ñ2 V1.3 B1.3.4 D1.3.4.9.12 T3 तु (B4 च) स शरः; B2 तु संबद्धः; D2 तु सशिराः; T1.2 G3 -[आ]वृतशरः (for स तु शरः). Ñ1 ज्वालामालीव स शरः. —^b) G2 M10 क्रुद्धाद्( M10 °न )नुगतो; M8 क्रौंचव्यानुगतो. —^c) Ś2.3 D12 मुक्तान् (for मुक्तो). B4 पुष्पान्; T3 गुल्मं (for गुल्मान्). B3 लताश्; D9 क्रमाच्; T3 लता (for द्रुमांश्). V1 विमुक्तास्ताश् (for गुल्मान्द्रुमांश्). D6.7.10.11 चापि; T3 यद्वद् (for चैव). —^d) G1 M7.9 भस्मीकृत्वा. Ś V1.3 D1–5.8.9.12 T3 भस्मसादकरोत्तदा; Ñ भस्मीकृत्वाभ्य-धावत; B1 भस्मीकृत्यानुधावत; B2–4 भस्मी( B2 °स्म )-कृत्याभ्यधावत.

G. 7. 25. 43
B. 7. 21. 44
L. 7. 24. 33

ते तस्य तेजसा दग्धाः सैन्या वैवस्वतस्य तु ।
रणे तस्मिन्निपतिता दावदग्धा नगा इव ॥ २८

ततः स सचिवैः सार्धं राक्षसो भीमविक्रमः ।
ननाद सुमहानादं कम्पयन्निव मेदिनीम् ॥ २९

इति श्रीरामायणे उत्तरकाण्डे एकविंशः सर्गः ॥ २१ ॥

28 $^{a}$) Ś $V_1$ $D_{1-5.8.9.12}$ $T_3$ अथास्त्र-( $D_{1.2.4}$ °स्य ); $T_2$ ततोस्य ( for ते तस्य ). —$^{b}$) Ś Ñ $V_{1.3}$ B $D_{1-5.8.9.12}$ $T_3$ योधा ( for सैन्या ). Ś $D_{8.9.12}$ वैवस्वताश्च. Ś $V_{1.3}$ $D_{1-3.5.8.9.12}$ $T_3$ ते; $Ñ_1$ $B_2$ च; $Ñ_2$ $B_{1.3.4}$ ह ( for तु ). $D_4$ चैवास्य लक्ष्यते ( for वैवस्वतस्य तु ). —$^{c}$) $D_{7.10.11}$ बले ( for रणे ). $T_4$ प्रपतंति रणे तस्मिन्. —$^{d}$) $D_{6.7.10.11}$ $T_4$ माहेंद्रा इव केतवः . — For $28^{cd}$, Ś Ñ $V_{1.3}$ B $D_{1-5.8.9.12}$ $T_3$ subst. :

420* निपतन्ति रणे तस्मिन्महेन्द्रध्वजसंनिभाः ।

[ Ś $V_3$ $D_{2.8.9.12}$ न्यपतंत ( for निपतन्ति ). Ñ $B_{1-3}$ क्षणे-( $B_{2.3}$ अने )न तस्मिन्निह( $B_1$ °न्निपत [ hypm. ] )ता; $B_4$ क्षणेन निहताः सर्वे ( for the prior half ). $Ñ_2$ माहेंद्र-. Ñ B -द्विप- ; $D_{1.4}$ -वज्र- ; $D_2$ -द्विज- ( for -ध्वज- ). ]

29 $^{a}$) $Ś_{2.3}$ $D_{6.7.10-12}$ $T_{1.2}$ $G_3$ तु ( for स ). —$^{b}$) $T_{1.2}$ $M_3$ रावणो ( for राक्षसो ). —$M_6$ om. $29^{cd}$. —$^{c}$) $D_8$ तु ( for सु- ). $Ś_1$ $D_{3.8}$ $T_3$ $M_7$ -महान् ( for -महा- ). $M_8$ -नादः . —After 29, $V_1$ $D_3$ $T_{3.4}$ ins. :

421* प्रहस्तप्रमुखाश्चापि नेदुश्च भृशहर्षिताः ।

[ $D_3$ ते ( for first च ). $T_3$ ते चाप्यनर्दन्; $T_4$ ये चाप्यनदन् ( for चापि नेदुश्च ). ]

Colophon : $V_1$ om. —*Kāṇḍa name* : Ś $D_2$ $M_7$ om. —*Sarga name* : Ś $D_{1.3-5.12}$ यमबल( $D_5$ °सैन्य )विध्वंसो ( $Ś_1$ $D_{5.12}$ °सनं; $D_3$ °सनो ); Ñ $B_{1.3.4}$ वैवस्वतबलविध्वंसनं; $V_3$ $D_9$ बलविध्वंसनं( $D_9$ °नो ); $B_2$ वैवस्वतविध्वंसनं; $D_2$ बलध्वंसनं; $D_8$ धर्मराजबलिविध्वंसो. —*Sarga no.* : Ś $Ñ_1$ $V_3$ $B_{1-3}$ $D_2$ om. ; $Ñ_2$ $B_4$ $D_{1.4.5}$ $M_6$ 25; $D_{3.8.9}$ $T_4$ 24; $T_3$ 23. —After colophon, $T_4$ concludes with श्रीरामार्पणमस्तु; G $M_{5.8}$ with श्रीरामाय नमः; $M_{10}$ with श्रीरामचन्द्राय नमः .

# २२

स तु तस्य महानादं श्रुत्वा वैवस्वतो यमः ।
शत्रुं विजयिनं मेने स्वबलस्य च संक्षयम् ॥ १
स तु योधान्हतान्मत्वा क्रोधपर्याकुलेक्षणः ।
अब्रवीत्त्वरितं सूतं रथः समुपनीयताम् ॥ २
तस्य सूतो रथं दिव्यमुपस्थाप्य महास्वनम् ।
स्थितः स च महातेजा आरुरोह महारथम् ॥ ३
पाशमुद्गरहस्तश्च मृत्युस्तस्याग्रतः स्थितः ।
येन संक्षिप्यते सर्वं त्रैलोक्यं सचराचरम् ॥ ४
कालदण्डश्च पार्श्वस्थो मूर्तिमान्स्यन्दने स्थितः ।
यमप्रहरणं दिव्यं प्रज्वलन्निव तेजसा ॥ ५
ततो लोकास्त्रयस्त्रस्ताः कम्पन्ते च दिवौकसः ।
कालं क्रुद्धं तदा दृष्ट्वा लोकत्रयभयावहम् ॥ ६

G. 7.26.6
B. 7.22.6
L. 7.25.6

## 22

☞ V2 missing for Sarga 22 ( cf. v.l. 7.12.2 ). D12 begins with ॐ; T3 with श्रीरामाय नमः .

1 a) V1 तं ( for स ). Ś1 B1 D6.7.10.11 Cg.k.t तस्य तु ( by transp. ); V1 T3.4 तु तेषां ( for तु तस्य ). —b) Ś Ñ V1.3 B D T3.4 प्रभुः ( for यमः ). —c) D2 श्रुत्वा ( sic ); D8 om.; D9 स तं ( for शत्रुं ). Ś D8.9.12 विजयमानं ( D8 °सारं ) वै. —d) Ś V3 D1.2.4.5.8.9.12 परिक्षयं; V1 पराजयं; G1 च संक्षयात् .

2 G3 damaged for $2^{a}$. —a) Ś V1.3 D1–5.8.9 T3 ततो; Ñ B1.2.4 D6.7.10–12 Cg स हि; M2 स च ( for स तु ). Ś1 Ñ1 V1.3 D1–4.8.9.12 T3.4 ज्ञात्वा; Ś2.3 G1 श्रुत्वा ( for मत्वा ). —b) T1.2 M3 कोप- . Ś Ñ V1.3 B D T3.4 M10 क्रोधसं( T3 °धात्सं )रक्तलोचनः . —c) Ñ2 B D2.3.5–7.10–12 T1.3 M8 त्वरितः . —d) D10.11 मे ( with hiatus ); K ( ed. ) [ ऽ ]यम् ( for सम्- ). Ś Ñ1 V1.3 D1–5.8.9.12 T3 रथं मे समुपानय; Ñ2 B D6.7 रथो मे यु( B2 स )ज्यतामिति; T4 M6.10 रथमानीयतामिति. ❀ Cg.t : उपनीयतामित्यब्रवीदित्यन्वयः । ; so also Ck. ❀

3 a) D1 T3 M3 ततः ( for तस्य ). D1 तस्य ( for सूतो ). Ñ2 B D6.7.10.11 तदा ( for रथं ). —b) Ś Ñ1 V1.3 B1 D1.2.4.8.12 उपस्थाय; T4 M10 उपा( M10 °प )नीय. Ś D8.12 महाप्रभं; Ñ1 V1 D3.5 T3 °जवं; Ñ2 B D1.2.4.6.7.10.11 °रथं; V3 D9 °बलः ( for महास्वनम् ). —c) B3 M6.9 स्थितस्य ( for स्थितः स ). Ñ1 T G3 तु; D5 सु- ( for च ). —d) T4 M10 ह्यारुरोह. T4 G2 M2.5.10 रथोत्तमं ( for महारथम् ). Ś D2.8.9.12 रथं समध्य( Ś1 °भि; D2.8.12 °धि )रोहत; Ñ1 D1.4 रथं तमधि( Ñ1 °भि )रोहत; Ñ2 B D6.7.10.11 अध्या( B2 प्राध्या; D6.7 अध्य )रोहत तं रथं; V1.3 रथं समधिरोहयत् .

4 a) Ś2.3 Ñ2 B2.4 D2.5–7.9–12 T3.4 G1.2 M2.4–10 प्रास- ; D1.4 पश्य ( for पाश- ). Ñ1 V1.3 B D5 T3 M5.10 तु ( for च ). —b) G2 M5 चैव ( for तस्य ). —D5 om. ( hapl. ) $4^{c}$ – $5^{b}$. —c) T4 G1.2 M5 संक्षीयते; Ck.t as in text ( for संक्षिप्यते ). M4 लोकं. —d) Ñ2 B D6.7.10.11 T1.2.4 G M1-4.6–10 इदमव्ययं ( for सचराचरम् ). —After 4, V3 reads $9^{ab}$ ( followed by 423* ).

5 D5 om. $5^{ab}$ ( cf. v.l. 4 ). V3 reads 5–6 after 8. —a) Ś Ñ2 V1.3 B D1–4.6–12 T1 तु; M10 स ( for च ). —b) Ñ1 स्यंदनस्थितः; Ñ2 B D6.7.10.11 अस्य चाभवत् ; T1.2 G M1–5.7–9 स्यंदनोत्तमे. —d) T1.2 G3 M1–3.5.9 प्रदहन् ; G2 M8 प्रहसन् ( for प्रज्वलन् ). Ś D1.2.4.8.9.12 T3 तेजसैव समु( T3 महो )ज्वलं; Ñ1 V1 तेजसैव समाज्वलत् ; Ñ2 B D6.7.10.11 K ( ed. ) तेजसा ज्वलदग्निवत् ( K [ ed. ]°मत् ); V3 D3.5 तेजसा प्रज्वलन्निव. —After 5, D3 T G2.3 M B( ed., within brackets ) Cg read 28 for the first time, repeating it in its proper place; while G1 reads 28 for the first time after 5, repeating it after 7.23.43.

6 V3 reads 5–6 after 8. —a) Ś Ñ1 V1.3 D8.12 कृत्स्नाश्च ; D1–5.9 क्षुब्धाश्च ( for त्रस्ताः ). G1.2 त्रयो लोका भयत्रस्ताः ; M10 ततो लोकास्तु वित्रस्ताः. —b) Ś Ñ1 V1.3 D1–5.8.9.12 T3.4 M5 चकंपे( M5 कंपते ) च वसुंधरा; M6.10 कंपते च दिवाकरः. —For $6^{ab}$, Ñ2 B D6.7.10.11 subst. :

422* ततो लोकत्रयं क्षुब्धमकम्पन्त दिवौकसः ।

—c) Ñ1 V1 B1 T3 M2.3.5 ततो; Ñ2 V3 D5–7.10.11 T4 G2 तथा ( for तदा ). Ñ1 ज्ञात्वा ( for दृष्ट्वा ). Ñ2 B D6.7.10.11 transp. क्रुद्धं and दृष्ट्वा. —d) Ś V1 D1–5.8.9.12 G1 M2.4–10 लोकक्षय- ; Ñ B D6.7.10.11 G2 सर्वलोक- ( for लोकत्रय- ). Ś D2.8.9.12 -भयंकरं; B2 -भयप्रदं; G3 -क्षयावहं ( for -भयावहम् ). V3 लोकपाल **** ( lacuna ). —After 6, Ñ2 B D3.6.7.9–11 S ins. ; while V3 ins. after $9^{ab}$ :

423* ततः संचोदयन्सूतस्तान्हयान्रुचिरप्रभान् ।
प्रययौ भीमसंनादो यत्र रक्षःपतिः स्थितः ।
मुहूर्तेन यमं ते तु हया हरिहयोपमाः ।
प्रापयन्मनसस्तुल्या यत्र तत्प्रस्तुतं रणम् ।

[ ( l. 1 ) Ñ2 V3 B1 D9 तु चोदयन् ; B2.3 D7.10.11 T1 G3 स्व( B2 T1 G3 सं )चोदयत् ; K ( ed. ) Cg प्रचोदयन् . D3 तत्र ( for सूतस् ). D6 T2 M3 संचोदयामास. Ñ2 V3 D6.7.9–11 तानश्वान् ; B2 हयांश्च; T3 तान्पाशान् ; G2 हयांस्तान्

G. 7. 26. 9
B. 7. 22. 9
L. 7. 25. 7

दृष्ट्वा तु ते तं विकृतं रथं मृत्युसमन्वितम् ।
सचिवा राक्षसेन्द्रस्य सर्वलोकभयावहम् ॥ ७
लघुसत्त्वतया सर्वे नष्टसंज्ञा भयार्दिताः ।
नात्र योद्धुं समर्थाः स्म इत्युक्त्वा विप्रदुद्रुवुः ॥ ८
स तु तं तादृशं दृष्ट्वा रथं लोकभयावहम् ।
नाक्षुभ्यत तदा रक्षो व्यथा चैवास्य नाभवत् ॥ ९
स तु रावणमासाद्य विसृजञ्शक्तितोमरान् ।
यमो मर्माणि संक्रुद्धो राक्षसस्य न्यकृन्तत ॥ १०
रावणस्तु स्थितः स्वस्थः शरवर्षं मुमोच ह ।
तस्मिन्वैवस्वतरथे तोयवर्षमिवाम्बुदः ॥ ११

---

(by transp.) (for तान्हयान्). D3.6 T3.4 G M1–5.8–10 Cg रुधिर- (for रुचिर-). —(l. 2) V3 तं यमो(sic) (for प्रययौ). D3 -निर्ह्रादो; G1 M6 -संनाहो (sic); M8 -संकाशो; M9 -सेनादौ (for -संनादो). D6 T1.2 G2.3 M1–4.7–9 रक्षोधिपः (for रक्षःपतिः). D3.7 प्रतिष्ठितः(D7 °तं) (for -पतिः स्थितः). —D9 om. l. 3–4. —(l. 3) T3 ययुस् (for यमं). B1 G2 तं (for ते). B4 समास्तत्र (for यमं ते तु). —(l. 4) D3 प्रययुर् (for प्रापयन्). G2 मनसा; Cg.k.t as above (for मनसस्). B3 तत्प्रस्थितं; T4 यत्र तु तं (for तत्प्रस्तुतं). D3 बलं (for रणम्). B2 यत्र स प्रस्तुतो रणः (for the post. half). ]

—Thereafter D3 cont.:

424* ततो मृत्युसमायुक्तं वरं ह्यरिरथारुजम् ।
श्वसद्भिः पन्नगैर्युक्तं तस्य भीता निशाचराः ।

7 $^{a}$) Ś1 D8 तं ते; Ś2.3 Ñ1 V1 D1–4.9.12 T3 ते तु (for दृष्ट्वा). Ś Ñ1 V1 D1.2.4.8.9.12 संदृश्य; Ñ2 V3 B D5–7.10.11 तथैव; D3 T3 संप्रेक्ष्य; T4 G1 [अ]थ ते तं(T4 तु); M6 तथा तं (for तु ते तं). G2 M2.4.5.7–9 दृष्ट्वा तु राक्षसास्ते तं. —$^{b}$) B1 -समर्चितं (for -समन्वितम्). Ś Ñ1 V1 D1–4.8.9.12 T3 रथं मृत्योर्भयावहं. —$^{d}$) T4 G1 -भयावहाः; G2 -भयंकरं. Ś Ñ V1.3 B D T3 सहसा वि(Ñ1 V1 °हसैव; B °हिता वि)प्रदुद्रुवुः. —After 7, M3.4 ins.:

425* अभ्यधावन्त संक्रुद्धा बलिनोऽतिभयंकराः ।

—Then M4 repeats wrongly 7.21.22–24$^{ab}$.

8 Ś1 D1.4.8 om. (hapl. see var.) 8. —$^{a}$) G1.2 M3–5.7 अल्प-; Cg.k.t as in text (for लघु-). Ś2.3 D12 -चित्ता यतस्; D2.9 -चित्ततया (for -सत्त्वतया). Ś2.3 Ñ V1.3 B D2.3.5–7.9–12 T3 ते हि (for सर्वे). —$^{b}$) G1 नष्टवज्रा. T4 M10 राक्षसा विप्रदुद्रुवुः. —M10 om. (hapl. ?) 8$^{cd}$. —$^{c}$) Ñ2 B D6.7.10.11 नेह; D5 तान्न (for नात्र). Ñ2 B3 D10 युद्धं (for योद्धुं). M1 समर्थोऽहम्. —D9 om. after इत्युक्त्वा up to 9. —$^{d}$) Ś2.3 Ñ1 V1.3 D2.3.5.12 T3.4 सं-; T1 G1.3 च; T2 ते (for वि-). Ñ2 B D6.7.10.11 प्रययुर्दिशः(B1 D7 °शं). —After 8, V3 reads 5–6.

9 D9 om. 9 (cf. v.l. 8). V3 reads 9$^{ab}$ (followed by 423*) after 4. —$^{a}$) B4 तं रक्षस्; D1 शत्रुं तं; G2 स ततस् (for स तु तं). —$^{b}$) Ś D2.8.12 मृत्युं; T2 M4.7 सर्व- (for रथं). —$^{c}$) Ś Ñ1 V1 D1–4.8.12 चुक्षुभे न; V3 lacuna; D5 प्रचुक्षुभे; T3.4 न चुक्षुभे (for नाक्षुभ्यत). Ś Ñ V1.3 B D1–8.10–12 T3.4 दशग्रीवो (for तदा रक्षो). M6 नाभ्युत्पतद्रणे रक्षो. —D5 om. 9$^{d}$–10$^{a}$. —$^{d}$) G1 नो (for न). Ś Ñ1 V1.3 D1–4.8.12 T3.4 न बभूवास्य च(V1 तु) व्यथा; Ñ2 B D6.7.10.11 न चापि भयमाविशत्.

10 D5 om. 10$^{a}$ (cf. v.l. 9). —$^{a}$) T1.2.4 G2.3 M यमो; T3 स तं; G1 धर्मो (for स तु). D9 संप्राप्य (for आसाद्य). —$^{b}$) Ś Ñ2 B1.3 D6–12 T1–3 M3 व्यसृजच्; Ñ1 V1.3 D2 G1.2 M1.2.5.6 विसृजच्; B2 विसृज्य (for विसृजञ्). T4 शक्तिमोजसा. —$^{c}$) T1.2.4 G M सर्व- (for यमो). Ś Ñ1 V1 D1.2.4.5.8.9.12 [ऽ]प्यस्त्राणि (for मर्माणि). B2 संक्रोधाद्; D1 चास्त्रेण; D5 दिव्यानि (for संक्रुद्धो). T3 यमो मर्मसु शस्त्राणि. —$^{d}$) Ś Ñ V1.3 B D1.2.4.6–12 रावणस्य (for राक्षसस्य). Ñ1 V1.3 T3 न्यपातयत्; B3 क्षतं कृतं (sic); B4 D2.3.5 T4 नि(T4 व्य)कृंतत; M6 [अ]भ्यकृंतत; M8 [अ]स्य कृंतत; K (ed.) [उ]पकृंतत. —After 10, T1.2.4 G M ins.:

426* मर्मसु छिद्यमानेषु रावणो राक्षसेश्वरः ।
सहंस्तस्थौ रुजं घोरां भिद्यमान इवाचलः ।

[ (l. 1) M3 मर्मसु भिद्यमानेषु (for the prior half). G2 M1 राक्षसाधिपः. —(l. 2) M4.6.7 रुजां (for रुजं). T2 G3 स तस्थौ पृथुजंघोरुर् (for the prior half). ]

11 $^{a}$) B2.4 च; T4 M6 [ऽ]पि; M10 [ऽ]व- (for तु). Ś Ñ V1.3 B D T3.4 ततः (for स्थितः). B1.3 D8 सुस्थः; D5 T3 क्रुद्धः (for स्वस्थः). —$^{c}$) D1.4 वैवस्वतश्चैव. —After 11, S ins.:

427* शरास्ते वज्रसंकाशाश्छादयन्तो रणे यमम् ।
यथाचलं महाघोरा नानावर्णा बलाहकाः ।
तान्निहत्य शरांस्तूर्णं रावणस्य यमः स्वयम् ।
ततः प्रहरणं घोरं मुमोचारिनिषूदनः ।

[ (l. 1) G2 M1.5.8.10 छादयंति. —(l. 2) T2 G2 -घोरं; G1 -वेगा; M6 -मेघा (for -घोरा). —G2 om. (hapl.) from the post. half up to the prior half of l. 4. T3 धारावर्षैर्; G3 M8 नानावर्षा(M8 °र्णा-) (for नानावर्णा). M6 नानाधारैः समावृणोत् (sic) (for the post. half). —(l. 3) T4 M10 रणे (for शरांस्). M6.10 राक्षसस्य (for रावणस्य). T4 M10 शरान्; M5 क्षयं (for स्वयम्). —(l. 4) G1 M6.10 प्रहरणान्घोरान्. M2.4.6.7.9 -निसूदनः. ]

ततो महाशक्तिशतैः पात्यमानैर्महोरसि ।
प्रतिकर्तुं स नाशक्नोद्राक्षसः शल्यपीडितः ॥ १२
नानाप्रहरणैरेवं यमेनामित्रकर्शिना ।
सप्तरात्रं कृते संख्ये न भग्नो विजितोऽपि वा ॥ १३
ततोऽभवत्पुनर्युद्धं यमराक्षसयोस्तदा ।
विजयाकाङ्क्षिणोस्तत्र समरेष्वनिवर्तिनोः ॥ १४
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
प्रजापतिं पुरस्कृत्य ददृशुस्तद्रणाजिरम् ॥ १५
संवर्त इव लोकानामभवद्युध्यतोस्तयोः ।
राक्षसानां च मुख्यस्य प्रेतानामीश्वरस्य च ॥ १६
राक्षसेन्द्रस्ततः क्रुद्धश्चापमायम्य संयुगे ।
निरन्तरमिवाकाशं कुर्वन्बाणान्मुमोच ह ॥ १७
मृत्युं चतुर्भिर्विशिखैः सूतं सप्तभिरर्दयत् ।
यमं शरसहस्रेण शीघ्रं मर्मस्वताडयत् ॥ १८
ततः क्रुद्धस्य सहसा यमस्याभिविनिःसृतः ।
ज्वालामालो विनिश्वासो वदनात्क्रोधपावकः ॥ १९

G. 7. 26. 21
B. 7. 22. 21
L. 7. 25. 19

---

**12** G1 om. $12^{ab}$.—$^{a}$) Ś V1.3 D1–5.8.9.12 T3 M3 गदा- (for महा-). T1.3 G2.3 M2–4.7–10 -शरैः; T2 -करैः; M1.5 -धरैः (for -शतैः). T4 M6 शितैर्महाशरैस्तीक्ष्णैः.—$^{b}$) Ñ1 T1 G2 M3.6 पात्यमानो; B2.4 G (ed.) दी(G [ed.]दा)र्यमाणो.—$^{c}$) B1 G1 च; T1.2.4 G3 M1.3.6 न (for स). T1.2 G3 M3 शक्नोति; T4 M6 शक्तः सन् (T4 स); G1.2 नासक्तो; M1 शक्तोभूद् (for नाशक्नोद्). Ś Ñ1 V1.3 D1.2.4.5.8.9.12 नाशकत्प्र(V3 नासक्तः प्र)तिकर्तुं(D2 °हर्तुं) स; Ñ2 B2–4 D6.7.10.11 T3 नाशक्नोत्प्रतिकर्तुं स; D3 नाशकत्समरं कर्तुं.—$^{d}$) Ñ1 G2 रावणः (for राक्षसः). B2 D7 T4 G1.2 M1.10 शर-; D1.4 शक्ति-; D10.11 स्वल्प- (for शल्य-).

**13** $^{a}$) Ś Ñ V1.3 B D T3 एवं नानाप्रहरणैर्.—$^{b}$) Ś Ñ V1.3 B D7.10.11 -कर्षिणा (for -कर्शिना).—B4 om. from संख्ये in $13^{c}$ up to $15^{b}$.—$^{c}$) T2 नव- (for सप्त-). Ś1 D2 T4 M2.6.8.9 -रात्र-; Ñ1 V1.3 D5 T3 -रात्रात्; D3 -वारान्; Ct as in text (for -रात्रं). Ś B1 D2.8.9.12 T1 कृतं; Ñ V1.3 B2–4 D1.3–5.7.10.11 T3 M6 कृतः (for कृते). Ś D8.9.12 संख्यं; B1 T1 युद्धं; T2.4 G2.3 M1.5.10 युद्धे (for संख्ये). ❀ Cv : सप्तरात्रिकृते संख्य इति पाठः. ❀ —$^{d}$) G1 वा (for वि-). Ś Ñ V1.3 B1–3 D1–5.7–12 T3.4 M5.6 विसंज्ञो(M5 न श्रांतो; M6 निःसंज्ञो)विमुखो रिपुः; D6 न भग्नौ न जितावपि; G2 M10 न जयो विजयोपि वा.

**14** B4 om. 14 (cf. v.l. 13).—$^{a}$) M5 समं (for पुनर्). Ś Ñ V1.3 B1–3 D1.2.4–12 T3.4 तदा(V1 यदा; B1 तत्रा; T3 अथा)सीत्तुमुलं युद्धं; G1 M3.4.7 तयोः(G1 °तः) समभवद्युद्धं.—$^{b}$) Ś1 D8 M6 तयोः; Ś2.3 Ñ V1.3 B1–3 D1–7.9–12 T3.4 द्वयोः; M3 तथा (for तदा).—$^{c}$) Ś Ñ V1.3 B1–3 D T3.4 जय(B3 यम[sic])माकांक्षतो(D3 T3.4 °क्षिणो)र्वीर(Ś1 D8 °तश्चैव).

**15** B4 om. $15^{ab}$ (cf. v.l. 13).—$^{b}$) B1–3 स (B3 [अ]पि) महर्षयः (for परमर्षयः).—$^{c}$) B1 नमस्कृत्य.—$^{d}$) Ś Ñ V1.3 B D T3.4 समेतास् (for ददृशुस्). Ś3 D12 तु; G2 ते (for तद्). Ś Ñ2 B1(before corr.; after corr. as in text).2 D5–8.10–12 G1 रणाजिरे.

**16** $^{a}$) Ś1 D8 लोकेषु; D3 लोकस्य (for लोकानाम्).—$^{b}$) G3 भवत्तद् (for अभवद्). G1 तदा (for तयोः). Ś D2.3.5.8.12 युध्यतोरावभौ तदा; Ñ V1 B D6.7.10.11 T3.4 युध्यतोरभवत्तदा; V3 D9 युध्येते तावुभौ तदा; D1.4 प्रेक्ष्यतां स बभौ तदा.—$^{c}$) T1.2 G3 M1 पुरोगस्य (for च मुख्यस्य).—$^{d}$) Ś2 ***म् (moth-eaten); B3 प्रभानाम् (sic); T1.2 G M प्रजानाम् (for प्रेतानाम्).

**17** D9 om. 17.—$^{a}$) Ś Ñ V1.3 B D1–8.10–12 T4 M6 [ऽ]थ(Ñ1 V1 T4 M6 तु; Ñ2 D6.7.10.11 [ऽ]पि) विस्फार्य; T1.2 G3 M3 तु संक्रुद्धश्; T3 तु निष्पाद्य (for ततः क्रुद्धश्).—$^{b}$) M8 आनम्य (for आयम्य). Ś Ñ V1.3 B D1–8.10–12 T3.4 M6 चापमिंद्राशनिस्वनं(Ś V1 D2.5.8.10–12 T3.4 °प्रभं).—$^{c}$) B1 D8 विच(D8 °ह)रंतम् (for निरन्तरम्).—$^{d}$) D8 M3.6 सः (for ह). Ś Ñ1 V1.3 D1.2.4.5.8.12 T3.4 अ(Ñ1 D5 व्य)मुंचत; Ñ2 B D6.7.10.11 ततोसृजत् (for मुमोच ह).

**18** $^{a}$) Ñ1 M9 मृत्युश्; T1.2 G3 M1 रथ्यांश्; G1 रथं (for मृत्युं). B3 च जित्वा (for चतुर्भिर्).—$^{b}$) Ś D8.12 कालं; D9 पुनः (for सूतं). Ś2.3 Ñ2 B D7.9–12 M10 आर्दयत्; Ñ1 V3 D2.3.5 T1 G3 M3 अर्दयन्; D8 om.; T4 एव च; M6 अर्दितः (for अर्दयत्).—$^{c}$) M6.9 यमः. Ś Ñ V1.3 B D1–6.8–12 T1–3 G3 M3.5.6 शत- (for शर-).—$^{d}$) D2.9 शीर्षे; D8 शीर्ष- (for शीघ्रं). Ś2.3 D12 शीर्षे समभ्यताडयत्; M6 शीघ्रं मर्मणि ताडितः.

**19** D11 om. $19^{ab}$.—$^{a}$) Ś D2.8.9.12 T3 वदनं(T3 °ने); Ñ V1.3 B1.2.4 D1.3–7.10 वदनाद्; B3 वचनाद् (for सहसा).—$^{b}$) Ś Ñ V1.3 B D1–10.12 T3 समजायत; T1.2 M1 [अ]भिविनिसृ(T1 °स्रु)तः.—$^{c}$) Ś Ñ V1.3 B D T2–4 G2 M3.5.7 ज्वालामाली; T1 G1.3 M2.4.8.9 ज्वालामाला-. Ś Ñ V1.3 B D T3.4 M7 सनि(Ś2.3 D2.4.8.9.12 T3 °निः)श्वासः; G2 M5 सनिश्वासाद् (for विनिश्वासो).—$^{d}$) Ś Ñ V1.3 B D T3 सधूमः (for वदनात्). Ś Ñ1 V1.3 B3 D1–5.8.9.12 इव; Ñ2 B1.2.4 D6.7.10.11 T4 M1.10 कोप- (for क्रोध-).—After 19, T3.4 ins. :

428* स प्रसन्निव त्रैलोक्यं पिबन्निव महोदधिम् ।

[T4 लोकांल्लीन् (for त्रैलोक्यं).]

G 7. 25. 22
B. 7. 22. 22
L. 7. 25. 20

ततोऽपश्यंस्तदाश्चर्यं देवदानवराक्षसाः ।
क्रोधजं पावकं दीप्तं दिधक्षन्तं रिपोर्बलम् ॥ २०
मृत्युस्तु परमक्रुद्धो वैवस्वतमथाब्रवीत् ।
मुञ्च मां देव शीघ्रं त्वं निहन्मि समरे रिपुम् ॥ २१
नरकः शम्बरो वृत्रः शंभुः कार्तस्वरो बली ।
नमुचिर्विरोचनश्चैव तावुभौ मधुकैटभौ ॥ २२
एते चान्ये च बहवो बलवन्तो दुरासदाः ।
विनिपन्ना मया दृष्टाः का चिन्तास्मिन्निशाचरे ॥ २३
मुञ्च मां साधु धर्मज्ञ यावदेनं निहन्म्यहम् ।
न हि कश्चिन्मया दृष्टो मुहूर्तमपि जीवति ॥ २४

---

20 $^{a}$) $M_{6}$ तम् (for तद्).—$^{b}$) $T_{4}$ यक्ष-; $G_{2}$ $M_{1.4-9}$ दैत्य- (for देव-). $M_{10}$ यक्षराक्षसदानवाः.—$^{c}$) $M_{1}$ कोपजं (for क्रोधजं).—$^{d}$) $T_{4}$ दीप्तवंतम् (sic). $T_{4}$ $M_{10}$ अरेर् (for रिपोर्).—For 20, Ś Ñ $V_{1.3}$ B $D_{1-5.7-12}$ $T_{3}$ subst.; while $D_{6}$ subst. l. 1 only for $20^{ab}$ (wrongly):

429* तदाश्चर्यमथो दृष्ट्वा देवदानवसंनिधौ ।
प्रहर्षितौ मुदा युक्तौ मृत्युकालौ बभूवतुः ।

[(l. 1) Ś$_{1}$ तथाश्चर्यम्; $D_{8}$ त ***म्. $D_{1.4}$ महद; $T_{3}$ अतो (for अथो). $B_{2}$ जज्ञे (for दृष्ट्वा). $D_{6}$ -राक्षसं (sic) (for संनिधौ).—(l. 2) $B_{2}$ प्रहर्षात्तु. Ñ$_{2}$ $B_{1}$ $D_{7.10.11}$ Ct सुसंरब्धौ; $B_{2-4}$ सुसंक्रुद्धौ (for मुदा युक्तौ).]

—After 20, $M_{5}$ ins.:

430* क्रुद्धस्य धर्षणात्तस्य मृत्योः कालस्य चोभयोः ।

21 $^{a}$) $M_{6}$ च (for तु).—$^{c}$) $G_{2}$ मा (for मां). $G_{3}$ $M_{3.5}$ तं (for त्वं). $M_{6}$ मुंच मा यावदेवं ते.—For 21, Ś Ñ $V_{1.3}$ B D $T_{3}$ subst.:

431* ततो मृत्युः क्रुद्धतरो वैवस्वतमभाषत ।
मुञ्च मां समरे यावद्धन्म्येनं पापराक्षसम् ।

[(l. 1) Ñ$_{1}$ क्रोधतरो (sic); $B_{3}$ क्रुद्धतस्तं (sic); $D_{9}$ कृते वैरे (for क्रुद्धतरो).—(l. 2) $D_{3.5}$ तावद्; $D_{8}$ **न् (for यावद्). Ñ$_{2}$ $D_{6.7.10.11}$ [इ]मं; $D_{2}$ [ए]वं (for [ए]नं). $V_{3}$ -जीवितं (for -राक्षसम्).]

—Thereafter, Ś Ñ $V_{1.3}$ B $D_{1-4.6-12}$ $T_{3}$ cont.; $D_{5}$ subst. for $25^{ab}$ and reads after 21; while $T_{4}$ ins. after 21:

432* न ममैष भवेत्कश्चिन्मर्यादा मे निसर्गतः ।

[Ñ$_{1}$ $B_{2}$ $D_{1-3}$ [ए]व; $B_{1.3.4}$ [ए]षा; $D_{9}$ [ए]नां (for [ए]ष). Ñ$_{2}$ $D_{6.7.10.11}$ नैषा ($D_{6.7}$ °ष) रक्षो (for न ममैष). $D_{3.9}$ तरेत् (for भवेत्). $T_{3}$ [अ]पहरेद्; $T_{4}$ [अ]वतरेत् (for [ए]ष भवेत्). Ñ$_{2}$ $B_{2-4}$ $D_{6.7.10.11}$ अद्य; $B_{1}$ अन्या (for कश्चिन्). $D_{3.9}$ $T_{3.4}$ मर्यादां. Ñ$_{1}$ $V_{1}$ $D_{3}$ $T_{4}$ वै; Ñ$_{2}$ $B_{1.3}$ $D_{6.7.10.11}$ हि; $B_{2}$ [अ]पि; $B_{4}$ [ए]षा (for मे). $V_{3}$ मेति निर्जयन् (for मे निसर्गतः).]

22 $^{a}$) $M_{1}$ समरे (for नरकः).—$^{b}$) $G_{2}$ $M_{1}$ जंभः (for शंभुः). $T_{1}$ $M_{2.3.9}$ कार्त ($M_{9}$ °म)स्वनो; $M_{6}$ आर्तस्वरो (for कार्तस्वरो). $T_{2}$ $G_{3}$ शमकः कार्तनो बली; $M_{8}$ शंभुकः कर्तनो बली.—$^{c}$) Hypm. $G_{3}$ [अ]पि (for [ए]व).—For 22, Ś Ñ $V_{1.3}$ B D $T_{3.4}$ subst.:

433* हिरण्यकशिपुः श्रीमान्नमुचिः शम्बरस्तथा ।
संह्रादो धूमकेतुश्च बलिर्वैरोचनोऽपि च ।
शंभुर्दैत्यो महाराजो वृत्रो बाणस्तथैव च ।
राजर्षयः शास्त्रविदो गन्धर्वाः समहोरगाः ।
ऋषयः पन्नगा यक्षास्तथैवाप्सरसां गणाः । [5]
युगान्तपरिवर्ते च पृथिवी समहार्णवा ।
क्षयं नीता महाराज सपर्वतवनद्रुमा ।

[(l. 2) Ś$_{1}$ विसंद्रो; Ś$_{2.3}$ $D_{12}$ वित्तद्रो; Ñ$_{2}$ $D_{6.7}$ संह्रादिर्; $B_{3}$ संह्रादी; $D_{1.4}$ संमार्दो; $D_{2.9}$ निसुंदो; $D_{8}$ विशुद्धो; $D_{10.11}$ निसंदिर्; $T_{3}$ निह्रादो; K (ed.) विसंधिर्; L (ed.) विसुंदो (for संह्रादो). $T_{4}$ बली (for बलिर्). $B_{2}$ वैरोचनिम्. Ś $D_{8.12}$ [ऽ]पि वा; $V_{3}$ $D_{6}$ नृपः; $B_{2}$ $D_{3}$ तथा (for ऽपि च).—(l. 3) $D_{5}$ शुंभ-; $D_{9}$ शुंभौ; K (ed.) Cg दंभुर्; Ck.t as above (for शंभुर्). $B_{2.4}$ $D_{6.7}$ दैत्य-; $D_{9}$ दैत्यौ (for दैत्यो). Ś $D_{2.5.9.11}$ $T_{3.4}$ -राज; $V_{3}$ -तेजा (for -राजो). ꙮ Cg : दम्भुर्नाम कश्चिदसुरः ।; Ck शं(भु)रिति कुशध्वजब्रह्मर्षिहन्तासुरः ।; so also Ct. ꙮ —(l. 4) Ś$_{1}$ $D_{5.7.9}$ शस्त्र-; $B_{1.3}$ चास्त्र-; $B_{2}$ चार्थ- (for शास्त्र-). $D_{9}$ च (for स-).—(l. 5) Ś$_{2.3}$ Ñ$_{1}$ $V_{1}$ $D_{3.5}$ $T_{3.4}$ पितरो; $D_{1.12}$ पतगा (for पन्नगा). $D_{5}$ किंनर- (for तथैव). Ñ$_{2}$ B $D_{6.7.10.11}$ दैत्या यक्षाश्च (for यक्षास्तथैव). Ñ$_{2}$ $B_{3}$ $D_{6}$ [अ]प्सरसो; $D_{10.11}$ ह्यप्सरो- (for [अ]प्सरसां). $T_{3}$ गणः.—L (ed.) reads l. 6 and 7 within brackets.—(l. 6) Ś Ñ$_{1}$ $B_{1}$ $D_{1.2.8.9.12}$ $T_{3}$ युगांते (for युगान्त-). Ś$_{1}$ $D_{2.8.9}$ $T_{3}$ परिवर्तेत ($T_{3}$ °तीं च); Ś$_{2.3}$ Ñ$_{1}$ $D_{12}$ परिवर्तते; $D_{5}$ -परिवर्तेन.—(l. 7) Ś$_{1}$ $D_{8}$ प्राप्ता; Ś$_{2.3}$ $D_{12}$ गता (for नीता). $B_{2}$ विनिष्पिष्टा (for क्षयं नीता). $B_{4}$ मया राजन् (for महाराज). Ñ$_{1}$ $B_{1.2.4}$ -सरीसृपा; Ñ$_{2}$ $D_{6.7.10.11}$ -सरिद्रुमा (for -वनद्रुमा). $B_{3}$ पर्वताश्च सरीसृपाः (for the post. half).]

23 $^{b}$) Ś $D_{2.8.12}$ [ऽ]परे ($D_{2}$ °राः) सदा (for दुरासदाः).—Ś$_{1}$ reads from दृष्टाः in $23^{c}$ up to मया in $24^{c}$ in marg.—$^{c}$) Ś Ñ$_{1}$ $V_{1.3}$ $D_{1-4.8.9.12}$ $T_{3.4}$ निपातिता; Ñ$_{2}$ B $D_{6.7}$ $M_{10}$ विपन्ना हि ($M_{10}$ °न्नाश्च); $G_{3}$ विनिषण्णा; $M_{4.5}$ विनिष्पन्ना; Cg.k.t as in text (for विनिपन्ना). $B_{1}$ दृष्टया; $D_{1.4}$ दुष्टः; $D_{2.3.12}$ दुष्टाः; $D_{8}$ दृष्ट्वा; $T_{1}$ G $M_{2.3.5.6.8-10}$ [आ]विष्टाः; $T_{3.4}$ सर्वे; Cg.k.t as in text (for दृष्टाः). $D_{5}$ मया निपातिता दुष्टाः.—$^{d}$) $M_{6}$ संज्ञा (for चिन्ता). Ś Ñ $V_{1.3}$ B D $T_{3.4}$ किमुतायं निशाचरः.

24 Ś$_{1}$ reads up to मया in $24^{c}$ in marg. (cf. v.l. 23).—$^{a}$) $B_{4}$ $M_{3}$ सर्व- (for साधु). $T_{3.4}$ भोद्यैव (for

बलं मम न खल्वेतन्मर्यादैषा निसर्गतः ।
संस्पृष्टो हि मया कश्चिन्न जीवेदिति निश्चयः ॥ २५
एतत्तु वचनं श्रुत्वा धर्मराजः प्रतापवान् ।
अब्रवीत्तत्र तं मृत्युमयमेनं निहन्म्यहम् ॥ २६
ततः संरक्तनयनः क्रुद्धो वैवस्वतः प्रभुः ।
कालदण्डममोघं तं तोलयामास पाणिना ॥ २७
यस्य पार्श्वेषु निश्छिद्राः कालपाशाः प्रतिष्ठिताः ।
पावकस्पर्शसंकाशो मुद्गरो मूर्तिमान्स्थितः ॥ २८
दर्शनादेव यः प्राणान्प्राणिनामुपरुध्यति ।
किं पुनस्ताडनाद्वापि पीडनाद्वापि देहिनः ॥ २९

G. 7. 26. 34
B. 7. 22. 34
L. 7. 25. 32

धर्मज्ञ ). —[b] ) G3 तावद्; Ck.t as in text ( for यावद् ). D2.8.9 G3 M10 एव; M2 एतं ( for एनं ). ❀ Cg : यावन्निहन्मि निहनिष्यामीत्यर्थः । यावद्योगे भविष्यदर्थे लट् । so also Ck.t. ❀ —G1 om. (hapl.); T1 reads *int. lin.* 24[c]–26. —[c] ) V1 न न ( for न हि ). D4 ( also ) कस्मिन् ( for कश्चिन् ). Ñ1 V1.3 D3.5 T1.4 G2.3 M1–6.8–10 [आ]विष्टो; D6.7 स्पृष्टो; Cg.k.t as in text ( for दृष्टो ). —[d] ) Ñ2 B D6.7.10.11 बलवान् ( for मुहूर्तम् ).

25 G1 om.; T1 reads *int. lin.* 25 ( for both, cf. v.l. 24 ). —For 25[ab], D5 subst. 432* and reads after 21. —[a] ) D2 न मम ( by transp. ). Ñ1 T3 [इ]दं; T4 [ए]वं ( for [ए]तन् ). —[b] ) Ś Ñ1 V1.3 D1–4. 8.9.12 T3 हि; B2 सा; G2 M9 Ck [ए]षां; Cg.t as in text ( for [ए]षा ). B2 विनिर्गता; M6 निसर्गजा; Cg.k.t as in text ( for निसर्गतः ). —D5 om. 25[cd]. —[c] ) Ś V3 D2.8.9.12 दृष्टो हि; Ñ1 B2.4 स्पृष्टो यन्; Ñ2 V1 B1 D6.7 T3 M6 स्पृष्टो हि; B3 दृष्टो यन्; D1.3.4 स्पृष्टो न; D10.11 Cg.t स दृष्टो; M3.8 संसृष्टो ( for संस्पृष्टो ). Ś Ñ V1.3 B D2.6–12 T3 M6 न; T2 G2.3 M1.3 [ऽ]पि ( for हि ). D10.11 काल ( for कश्चिन् ). ❀ Ck : संदष्ट इत्यादि । संहारचक्षुषा दृष्ट इत्यर्थः. ❀ —[d] ) M6 जीवेदित्येष ( for न जीवेदिति ). Ś V3 D1–4.8.9.12 T3 मुहूर्तान्नि्र( D1.3.4 T3 °र्तं ध्रि; D8.12 °र्ताद्धि्र )यते न यः ( D1.3.4.8 नरः; T3 ह्यसून् ); Ñ V1 B D6.7.10.11 M2 Cg.k.t मुहूर्तमपि जीवति ( cf. 24[d] ).

26 G1 om.; T1 reads *int. lin.* 26 ( for both, cf. v.l. 24 ). —[a] ) Ñ1 B तस्येदं; Ñ2 D6.7.10.11 तस्यैवं; V3 एवं तु ( for एतत्तु ). D6 हि वचः ( for वचनं ). D3.5 एवं मृत्युव( D3 °त्योर्व )चः श्रुत्वा; T3 एतद्वचनमाकर्ण्य. —D5 om. 26[cd]. —[c] ) D3 T3 हर्षयन्; M10 तत्र वै ( for तत्र तं ). —[d] ) Ś D2.8.12 य एनं च; Ñ B1.2.4 D6.7.10.11 त्वं तिष्ठेनं; V3 T1.2.4 G2 M3.5.8 स्वयमेनं( T4 °व ); B3 तिष्ठेनं त्वं; D1.9 M6.10 अहमेनं( M6.10 °व ); G3 मा स्वमेनं; M1 यावदेनं ( for अयमेनं ). D7 हि ( for नि- ). D9 च; T4 M6 तं; M10 [अ]मुं ( for [अ]हम् ).

27 [a] ) Ś2.3 D12 स ( for सं- ). M1 संरक्तनयनः क्रुद्धस. —[b] ) G2 दग्धो; M1 ततो ( for क्रुद्धो ). G3 ( orig.; *int. lin.* also as in text ) M6 यमः ( for प्रभुः ). —[c] ) Ś1 Ñ2 V1.3 D6.7.10.11 G2 M6 तु ( for तं ). D1.4 अथोद्यम्य ( for अमोघं तं ).

28 D3 T G2.3 M B ( ed., within brackets ) Cg repeat 28 here ( cf. v.l. 5 ). G1 reads 28 for the first time after 5, repeating it after 7.23.43: —[a] ) D3 T G M1–5.7–9 Cg ( D3 second time and the rest first time ) तस्य; M3 ( second time ) स्वस्य; M10 ( first time ) अस्य ( for यस्य ). B2 D3 ( second time ) पार्श्वे सु-; T2 G2.3 M1.3.6.10 ( M1.10 first time and the rest second time ) पार्श्वे तु ( for पार्श्वेषु ). Ñ2 B D6.7.10.11 निहिताः; D8 M2.9 ( M2.9 first time ) [अ]निश्छिद्राः; T1.2.4 G M1–5.7–10 ( all second time ) निखिलाः; T4 M10 ( both first time ) सततं; M6 ( first time ) निस्त्रिंशाः; Cg ( first time ) as in text ( for निश्छिद्राः ). D3 ( first time ) यस्य पार्श्वे विचित्राश्च. —[b] ) T4 ( second time ) पाशाश्चैव ( for कालपाशाः ). —[c] ) D7.10.11 -[अ]शनि-; T4 ( both times ) -प्रति- ( for -स्पर्श- ). Ś D5.8.9.12 पावकस्याथ( D5.9 °स्य च ). Ñ2 B -निर्यासो ( B3 °तो ); M6.7 ( both first time ) -संकाशाः ( for -संकाशो ). —[d] ) M8 ( second time ) ततः ( for स्थितः ). Ś1 मूर्ध्नि व्यवस्थितः ( hypm. ); Ś2.3 Ñ B1 D5.7–9 मूर्ध्न्यवस्थितः; V1 D3 ( second time ) मूर्धनि स्थितः; V3 B2–4 D1.2.4.12 T3.4 ( T3.4 second time ) मूर्ध्नि सं( V3 D1.3.4.12 च )स्थितः; M6 ( second time ) मूर्ध्नि विष्ठितः; Ck.t as in text ( for मूर्तिमान्स्थितः ). D3 T3.4 M2.4–6.8.9 ( all first time )स्थितो मूर्ध्नि च( M8 स ) मुद्गरः ( T4 संस्थितः [ sic ] ); T1.2 G1.3 M1.3.7.10 ( all first time ) स्थितो मूर्तश्च मुद्गरः; G2 ( first time ) मूर्तिमानिव मुद्गरः.

29 [a] ) G1 यत् ( for यः ). B2 पाशान् ( for प्राणान् ). —[b] ) V1 D3 प्राणिनो. Ś B1 D8–12 विप्र( B1 अनु; D10.11 अपि )कर्षति; Ñ V1.3 B2–4 D1–7 T3 M3 अ( V1 D1–4 T3 व्य; V3 चा )पकर्षति; T4 उपरुध्य वै; M6.10 आ( M10 नि )रुणद्धि वै ( for उपरुध्यति ). —[c] ) T4 M6 स्पर्शनाद् ( for ताडनाद् ). T1.2 G3 M3 स्पर्शात्; T4 M1.10 चापि ( for वापि ). —[d] ) T4 M1.10 चापि; M3 अपि ( for वापि ). M6 ताडनाद्वापि देहिनां. —For 29[cd], Ś Ñ V1.3 B D T3 subst. :

434* किं पुनः स्पृश्यमानस्य ताड्यमानस्य वा पुनः ।

[ D5 स्पृश्यमानश्च. Ñ2 V3 B1–3 D6.7.10.11 पाल्यमानस्य; D5 ताड्यमानश्च. Ś1 वै ( for वा ). ]

तां प्रदीप्तां प्रगृह्याशु कालदण्डनिभां शुभाम् ।
तस्य मूर्धनि सावित्रः सुमालेर्विनिपातयत् ॥ ३९
तस्य मूर्धनि सोल्काभा पतन्ती च तदा बभौ ।
सहस्राक्षसमुत्सृष्टा गिराविव महाशनिः ॥ ४०
तस्य नैवास्थि कायो वा न मांसं ददृशे तदा ।
गदया भस्मसाद्भूतो रणे तस्मिन्निपातितः ॥ ४१
तं दृष्ट्वा निहतं संख्ये राक्षसास्ते समन्ततः ।
दुद्रुवुः सहिताः सर्वे क्रोशमाना महास्वनम् ॥ ४२

G. 7. 35. 47
B. 7. 27. 51
L. 7. 30. 45

इति श्रीरामायणे उत्तरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

---

39 a) Ś Ñ1 V1.3 D1-5.8.9.12 T3.4 महावेगां; G1 गृहीत्वाशु (for प्रगृह्याशु). Ñ2 B1.3.4 D6.7.10.11 M6 ततः प्र (B4 सं)गृह्य दीप्ताग्रां. —b) Ñ2 B1.3.4 D6.7.10.11 -[उ]पमां (for -निभां). Ś Ñ V1.3 B1.3.4 D1.3-11 T1.3.4 M6 गदां (for शुभाम्). D2.12 -निभाननां. —cd) D1.4 चिक्षेप (for सावित्रः). Ś V1.3 D2.3.5.8.9.12 T3.4 पातयामास रक्षसः; D1.4 सावित्रः परमाद्भुतां (for d). Ñ B1.3.4 D6.7.10.11 तां मूर्ध्नि पातयामास सावित्रो वै सुमालिनः.

40 a) T1 च (for सा). Ś Ñ V3 B1.3.4 D T3.4 सा तस्योपरि(V3 D5 T3 °रसि) चो(V3 सो)ल्काभा; V1 (with hiatus) तस्य चोरसि उल्काभा; M6 सा तस्य मूर्ध्नि ह्युल्काभा. —b) G1 M8 [इ]व (for च). Ś D8.12 निपतंती (for पतन्ती च). T1.2 G3 M1.3 गदा (for तदा). D12 बभौ तदा (by transp.). Ñ V1.3 B1.3.4 D1-4.6.7.9-11 T3.4 विब-(B3.4 निर्बं)भौ ग(V3 D2.9 T3 त)दा; D5 M6 च(D5 [इ]व) बभौ ग(D5 त)दा (for च तदा बभौ). —c) Ś V1 D2.8.9.12 इंद्रप्रयुक्ता राजंती; Ñ V3 B1.3.4 D1.3-7.10.11 T3.4 M6 इं(V3 रु)द्रप्रमु(T3.4 °यु)क्ता गर्जं(M6 °च्छं)ती. —d) Ś V1.3 D1-5.8.9.12 M5 गिरेर् (for गिराव्). Ś Ñ1 B1.3.4 D2.8.9.12 T3.4 M2.6.8-10 यथा (for महा-).

41 a) B4 वै न (for नैव). Ś D8 T2 M8 [अ]स्ति (for [अ]स्थि). Ñ2 B1.3.4 D6.7.10.11 न शिरो (for कायो वा). —b) Ś Ñ1 V1.3 D1-5.8.9.12 T3.4 मांसं रुधिर(V3 T4 शोणित)मेव च(Ñ1 D3.5 T4 वा). —c) Ñ2 D6.7.10.11 G (ed.)भस्मतां नीतं(G [ed.]°तो); B1.3.4 भस्मसान्नीतं; T4 भस्मकृतः स (unmetric); M1 भस्मसंभूतो (for भस्मसाद्भूतो). M6 तस्मिन्कृताग्रे गदया. —d) M3.5.10 निशाचरः; M6 निपातिते (for निपातितः). Ñ2 B1.3.4 D6.7.10.11 G (ed.) निहतस्य(G [ed.] °तः स) रणाजिरे; T4 निपपात ****. —For $41^{cd}$, Ś Ñ1 V1.3 D1-5.8.9.12 T3 subst.:

569* दृश्यते गदया भस्मकृतः स निपपात ह ।

[Ñ1 V1 T3 भस्मीकृतः; V3 सम्यकृतः. D1.3.4 T3 सं- (for स). D1.3.4 च (for ह).]

—After 41, M3.10 ins.:

570* निपपात तदा भूमौ महातरुरिवाशनेः ।

[M3 ततो (for तदा).]

42 ab) M8 पातितं (for निहतं). —G3 damaged from b up to सहिताः in c. B4 transp. तं and ते. B1 निशाचरं; G1 निपातितं (for समन्ततः). —For $42^{ab}$, Ś Ñ1 V1.3 D1-5.8.9.12 T3.4 subst.:

571* सुमालिनं हतं दृष्ट्वा वसुना राक्षसा भयात् ।

[D1.4 श्रुत्वा; T4 संख्ये (for दृष्ट्वा). V1.3 बलिनो; T3 बलिना (for वसुना). D8 T4 भस्मसात्कृतं (for राक्षसा भयात्).]

—c) Ñ2 B1.3.4 D6.7.10.11 व्यद्रवन्; V1 प्रदुद्रुवुः (hypm.) (for दुद्रुवुः). Ñ1 ते वै प्रदुद्रुवुः सर्वे. —d) M5 क्रोधमाना. Ś V1.3 D1-5.8.9.12 T3.4 समंततः; Ñ1 ततस्ततः; Ñ2 B1.3.4 D6.7.10.11 परस्परं (for महास्वनम्). —After 42, Ñ V1.3 D1.3.4.6.7.10.11 T3.4 ins.:

572* विद्राव्यमाणा वसुना राक्षसा नावतस्थिरे ।

—Thereafter V1 repeats $21^{ab}$ (var.).

Colophon: V1 om. (cont. the Sarga). —*Kāṇḍa name*: Ś1 D2.7 M7 om. —After Kāṇḍa name, D5 ins. दैवासुरसंग्रामे. —*Sarga name*: Ś Ñ V3 B1.3.4 D1-5.8-12 सुमालि(Ñ2 B3 D1 °ली)वधः. —*Sarga no.* (figures, words or both): Ś Ñ1 V3 B1 D2.12 om.; Ñ2 B3.4 35; D1.4.5 T4 34; D3.9 33; D8 T3 32; M6 31. —After colophon, D2 concludes with रामचन्द्र; T4 with श्रीरामार्पणमस्तु; G1.3 M5.8 with श्रीरामाय नमः; M1 with ॐ ॐ श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

## २८

G. 7. 36. 1
B. 7. 28. 1
L. 7. 34. 1

सुमालिनं हतं दृष्ट्वा वसुना भस्मसात्कृतम् ।
विद्रुतं चापि स्वं सैन्यं लक्षयित्वार्दितं शरैः ॥ १
ततः स बलवान्क्रुद्धो रावणस्य सुतो युधि ।
निवर्त्य राक्षसान्सर्वान्मेघनादो व्यतिष्ठत ॥ २
स रथेनाग्निवर्णेन कामगेन महारथः ।
अभिदुद्राव सेनां तां वनान्यग्निरिव ज्वलन् ॥ ३
ततः प्रविशतस्तस्य विविधायुधधारिणः ।
विदुद्रुवुर्दिशः सर्वा देवास्तस्य च दर्शनात् ॥ ४
न तत्रावस्थितः कश्चिद्रणे तस्य युयुत्सतः ।
सर्वानाविध्य वित्रस्तान्दृष्ट्वा शक्रोऽभ्यभाषत ॥ ५
न भेतव्यं न गन्तव्यं निवर्तध्वं रणं प्रति ।
एष गच्छति मे पुत्रो युद्धार्थमपराजितः ॥ ६

## 28

☞ V2 G2 missing for Sarga 28 (cf. v.l. 7.12.2 and 7.26.45 respy.). B2 om. Sarga 28 (cf. v.l. 7.24.1).

1 $^{a}$) D1.4 श्रुत्वा (for दृष्ट्वा). M6 सुमालिं निहतं दृष्ट्वा. —$^{c}$) Ś V3 D1–5.8.9.12 M5.8 [अ]पि तत्सैन्यं; Ñ1 हतं श्रुत्वा; V1 हतं सैन्यं; T1.3 G3 M1.3.7 स्वकं सैन्यं; T2 स्व * * * (damaged); T4 [ए]व तत्सैन्यं; M10 [अ]पि सैन्यं स्वं (by transp.) (for [अ]पि स्वं सैन्यं). Ñ2 B1.3.4 D6.7.10.11 M4 स्वसैन्यं विद्रुतं चापि. —$^{d}$) T1.2 लंघयित्वा. Ñ V1.3 B1.4 D2.6.7.9–11 [अ]र्दितं सुरैः; D1.3.4 °तः सुतः; T1.2 G3 M1.3 शरार्दितं; M2 [अ]र्दितं शतैः; M6 जितं सुरैः (for [अ]र्दितं शरैः). G1 लक्षयामास तं शरैः.

2 $^{a}$) Ñ1 B4 T3 M4.6–8.10 सु-; T1.2 G3 M1 तु (for स). D5 स तस्य (for ततः स). G1 माल्यवान् (sic) (for बलवान्). Ñ1 रक्षो (for क्रुद्धो). —$^{b}$) Ś Ñ V1.3 B1.3.4 D तदा; T3 तथा; M6 बली (for युधि). —$^{c}$) B1.3 निर्भर्त्स्य; D1.4 निवृत्य (for निवर्त्य). —$^{d}$) Ś Ñ V1.3 B1.3.4 D1–4.6–12 T3 M6 व्यवस्थितः; M8 [ऽ]भ्यतिष्ठत; M10 [ऽ]वति° (for व्यतिष्ठत).

3 D12 om. $3^{ab}$. —$^{a}$) K (ed.) सुरथेन. Ś D8 म(D8 स)हाश्वेन; Ñ V1.3 B1.3.4 D1–7.9–11 T3 महार्हेण (for [अ]ग्निवर्णेन). —$^{b}$) Ñ2 महाबलः (for °रथः). —$^{c}$) Ś Ñ V1.3 B1.3.4 D1–5.8.9.12 T3.4 M6 तत्सैन्यम्; T1.2 G3 M1.3 Cg.k.t तां सेनां (by transp.). —$^{d}$) Ś Ñ B1.3.4 D2.8.9.12 T3.4 M6 अग्निः कक्षम् (Ś Ñ D12 °क्ष्यम्; D8 °क्ष्याम्); D1.3–5 कक्षमग्निर् (for वनान्यग्निर्). Ñ1 [आ]दहन् (for ज्वलन्). V1.3 अग्निः कक्ष(V1 °क्ष्य)गतो दहन्.

4 $^{a}$) M6 तत्र (for तस्य). D9 प्रविशतस्तदा तस्य; G1 ततः प्रविशता तेन. ❀ Cv: ततः प्रविशतस्तस्य ततः प्रविशति तस्मिन्. ❀ —$^{b}$) D5 G1 -[आ]युधपाणयः; T4 °पाणिनः; M6 -[अ]स्त्रप्रहारिणः (for -[आ]युधधारिणः). —$^{c}$) Ś1 Ñ1 V1.3 D1–5.8.9.12 T3.4 द्व(T3 अ)द्रवंत; Ś2.3 विद्रवंति; B1 प्रदुद्रुवुर् (for विदुद्रुवुर्). M8 ततः (for दिशः). M3.5.8.10 सर्वे. —$^{d}$) M6 वै तस्य (for तस्य च). Ś Ñ V1.3 B1.3.4 D T3.4 दर्शना(then D11 reads in marg.)देव देवताः. —After 4, V1 ins. l. 2 only of 575*.

5 V1 om. 5–6. —For $5^{ab}$, Ś Ñ1 V3 D1–5.8.9.12 T3.4 subst.:

573* न त्वस्य कश्चित्प्रमुखो बभूवान्यो युयुत्सतः ।

[Ñ1 D2.9 तस्य; V3 D1.3–5 T3.4 तत्र (for त्वस्य). V3 D1–5.9 T3.4 प्रमुखे. Ñ1 [अ]त्र; V3 D1.3–5 T3.4 [अ]स्य (for [अ]न्यो). V3 T4 रणोत्सुकः (for युयुत्सतः).];
while Ñ2 B1.3.4 D6.7.10.11 subst. for $5^{ab}$:

574* न बभूव तदा कश्चिद्युयुत्सोरस्य संमुखे ।

[B4 युध्यतोर् (for युयुत्सोर्).]

—$^{c}$) D6.7 अवेक्ष्य; D9 उद्विग्न-; T3 आलक्ष्य; M5 आमथ्य; M8 तानपि; Cg.k.t as in text (for आविध्य). D9 -संत्रस्तांस्; G3 विध्वस्तान्; Cg.k.t as in text (for वित्रस्तान्). Ś D2.8.12 दृष्ट्वा तु देवान्संत्रस्तांस्; Ñ1 D3.5 सर्वमाविध्य(Ñ1 D5 °भ्र-)वित्रस्तं; V3 सर्वानाविधमस्तत्र (sic); D1.4 सर्वं दृष्ट्वा तु वित्रस्तं; T1.2 M3 सर्वानायुधविध्वस्तान्; M6 सर्वानपि परित्रस्तान्. —$^{d}$) Ś Ñ V3 B1.3.4 D1.3–8.10.11 T4 ततः; D2.9.12 तत्र (for दृष्ट्वा). Ś Ñ V3 B3.4 D T4 M6 [ऽ]ब्रवीत्सुरान्; B1 [ऽ]ब्रवीद्वचः (for ऽभ्यभाषत).

6 V1 om. 6 (cf. v.l. 5). —$^{a}$) B1 भेतव्यं नो. Ś D2.7–9.12 T4 M1.4.7 न भेतव्यं; G1 M5 निवर्तध्वं (for न गन्तव्यं). —$^{b}$) G1 अहं यास्ये; M5 देवाः सर्वे (for निवर्तध्वं). Ś Ñ V3 B3.4 D T4 रणे सुराः; B1 सुदारुणं (for रणं प्रति). —$^{c}$) Ś1 Ñ2 B3.4 D6.7.10.11 transp. मे and पुत्रो. —After 6, Ś Ñ1 V3 D1–5.8.9.12 T3.4 ins.; while V1 ins. l. 2 only after 4 (owing to om.):

575* ते शक्रवचनं श्रुत्वा देवाः शत्रुबलार्दिताः ।
पुनर्निवृत्ता युद्धाय नानाप्रहरणोद्यताः ।

[(l. 1) D1.3.5 रक्षो-; D4 राक्षस- (hypm.) (for शत्रु-). T4 -भयार्दिताः. —(l. 2) D9 प्रवृत्ता. V3 युद्धार्थं (for युद्धाय).]

ततः शक्रसुतो देवो जयन्त इति विश्रुतः ।
रथेनाद्भुतकल्पेन संग्राममभिवर्तत ॥ ७
ततस्ते त्रिदशाः सर्वे परिवार्य शचीसुतम् ।
रावणस्य सुतं युद्धे समासाद्य व्यवस्थिताः ॥ ८
तेषां युद्धं महदभूत्सदृशं देवरक्षसाम् ।
कृते महेन्द्रपुत्रस्य राक्षसेन्द्रसुतस्य च ॥ ९
ततो मातलिपुत्रे तु गोमुखे राक्षसात्मजः ।
सारथौ पातयामास शरान्काञ्चनभूषणान् ॥ १०
शचीसुतस्त्वपि तथा जयन्तस्तस्य सारथिम् ।
तं चैव रावणिं क्रुद्धः प्रत्यविध्यद्रणाजिरे ॥ ११
ततः क्रुद्धो महातेजा रक्षो विस्फारितेक्षणः ।
रावणिः शक्रपुत्रं तं शरवर्षैरवाकिरत् ॥ १२
ततः प्रगृह्य शस्त्राणि सारवन्ति महान्ति च ।
शतघ्नीस्तोमरान्प्रासान्गदाखड्गपरश्वधान् ।
सुमहान्त्यद्रिशृङ्गाणि पातयामास रावणिः ॥ १३

G. 7. 36. 14
B. 7. 28. 14
L. 7. 34. 14

7 $^{c}$) Ś $D_{2.8.9.12}$ -युक्तेन; $D_{1.4}$ -रूपेण; $D_{3}$ -कारेण; $M_{3}$ -वर्णेन; $M_{5}$ -कालेन ( for -कल्पेन ). —$^{d}$) Ñ$_{2}$ $D_{6.7.10.11}$ संग्रामे; $D_{8}$ सं * *. Ś Ñ$_{2}$ $B_{1.3.4}$ $D_{6-12}$ सोभ्यवर्तत; Ñ$_{1}$ $D_{2}$ $M_{3}$ अ( $M_{3}$ ह्य )भ्य°; $V_{1}$ $M_{10}$ अभिवर्तते; $V_{3}$ प्रत्यपद्यत; $D_{1.3-5}$ $M_{6}$ प्रत्य( $M_{6}$ सम )वर्तत ( for अभिवर्तत ). $T_{3.4}$ संग्रामाभिमुखो ययौ.

8 $^{a}$) $T_{1.2}$ सचिवाः; $G_{1}$ राक्षसाः (sic) ( for त्रिदशाः ). —$^{b}$) Ś $D_{8.12}$ शचीपतिं. —$D_{5}$ om. $8^{cd}$. —$^{c}$) $B_{4}$ $M_{4.7}$ सुतं सर्वे; $M_{5.10}$ सुतं दृष्ट्वा; $M_{6}$ सुसंक्रुद्धाः ( for सुतं युद्धे ). —$^{d}$) Ñ$_{1}$ परिवार्य ( for समासाद्य ). Ś Ñ$_{1}$ $V_{1.3}$ $D_{1-4.8.9.12}$ $T_{3.4}$ [ अ ]वतस्थिरे; Ñ$_{2}$ $B_{3}$ $D_{6.7.10.11}$ प्रजज्ञिरे; $B_{1}$ प्रचक्रिरे; $B_{4}$ प्रजह्रिरे ( sic ); G ( ed. ) प्रतस्थिरे ( for व्यवस्थिताः ).

9 $^{a}$) Ś Ñ $V_{1.3}$ $B_{3.4}$ D समभवत् ( for महदभूत् ). $B_{1}$ $T_{3.4}$ तेषां समभवद्युद्धं. —$^{b}$) Ś Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-4.6-9.12}$ $T_{4}$ देवदानवरक्षसां. —$^{c}$) Ś Ñ$_{1}$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ शक्रपुत्रस्य शूरस्य; Ñ$_{2}$ $B_{1.3.4}$ $D_{6.7.10.11}$ महेंद्रस्य च पुत्रस्य. —$^{d}$) $M_{1}$ रावणस्य ( for राक्षसेन्द्र- ).

10 $^{a}$) Ś Ñ $V_{1.3}$ D $T_{3}$ -पुत्रस्य ( for -पुत्रे तु ). —Ñ$_{2}$ illeg. for $^{b}$. —$^{b}$) $T_{4}$ राक्षसाधिपः; $M_{6}$ रावणात्मजः ( for राक्षसात्मजः ). Ś Ñ$_{1}$ $V_{1.3}$ D $T_{3}$ गोमुखस्य स( $D_{7}$ $T_{3}$ च )रावणिः; $B_{1.3.4}$ गो( $B_{3}$ सं )मुखे स हि रावणिः. ❀ Cg: गोमुख इति मातलिसुतनाम ।; Ck: गोमुखो गोमुखाख्यः. ❀ —$^{c}$) Ñ $V_{1.3}$ $B_{1.3}$ $D_{1.3-7.10.11}$ $T_{3}$ $M_{5}$ सारथेः ( for सारथौ ). —$^{d}$) Ñ$_{2}$ $V_{1.3}$ $B_{1.3.4}$ $D_{5-7.10.11}$ कनक- ( for काञ्चन- ). $T_{4}$ $M_{5.6}$ -भूषितान्. —For $10^{cd}$, Ś $D_{2.8.9.12}$ subst.:

576* सारथेरथ कायाच्च क्षणेनापातयच्छिरः ।

[ $D_{2.9.12}$ शिरः कांचनकुंडलं ( for the post. half ). ]

11 $^{a}$) Ś$_{1.3}$ $D_{2.8.9.12}$ $T_{3}$ -पुत्रस्तु; Ś$_{2}$ -पुत्रस्य( sic ); Ñ$_{1}$ -सुतस्य ( sic ); Ñ$_{2}$ $V_{3}$ $B_{1.3.4}$ $D_{6.7.10.11}$ $T_{4}$ °श्च ( for -सुतस्तु ). $M_{1}$ [ ऽ ]पि च ( for स्त्वपि ). $T_{1.2}$ $G_{3}$ $M_{1}$ तदा. —$^{b}$) $V_{1.3}$ $D_{2.6.9}$ सारथेः ( for °थिम् ). —$^{c}$) Ñ$_{2}$ $V_{1}$ $D_{6.7.10.11}$ चापि; $T_{3}$ च वै ( for चैव ). Ś$_{2}$ $V_{1.3}$ $B_{4}$ $D_{2.9-11}$ $T_{1.2.4}$ $G_{3}$ रावणिः. $G_{1}$ क्रुद्धं ( for क्रुद्धः ). —$G_{3}$ om. (hapl.) from $11^{d}$ up to the prior half of 579*. —$^{d}$) $T_{2}$ $G_{1}$ $M_{4.5.7.10}$ प्रत्यपे( $T_{2}$ $M_{4}$ °वे )धद् ( for °विध्यद् ). Ś Ñ $V_{1.3}$ $B_{1.3.4}$ D समंतात्प्र( $B_{1.3.4}$ °मरे प्र ) त्यविध्यत. —After 11, $D_{3}$ ins.:

577* ततः पुनः स संधाय शरान्दश शचीसुतः ।
रावणिं स्तनयोर्मध्ये जघानातिसुदारुणैः ।

12 $G_{3}$ om. 12 ( cf. v.l. 11 ). —$^{a}$) Ś Ñ$_{1}$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ $M_{6}$ स तु क्रोधात्सुसंरब्धो( $M_{6}$ °क्रुद्धो ); Ñ$_{2}$ $B_{1.3.4}$ $D_{6.7.10.11}$ स हि क्रोधसमाविष्टो. —$^{b}$) Ñ$_{2}$ $B_{1.3.4}$ $D_{6.7.10.11}$ बली; $D_{1.3-5}$ $M_{6}$ रक्त- ( for रक्षो ). $B_{3.4}$ $D_{7}$ विस्फुरित-; $T_{2}$ विह्वलित- ( for विस्फारित- ). Ś Ñ$_{1}$ $V_{1.3}$ $D_{2.8.9.12}$ $T_{4}$ रक्तांतनयनस्ततः( Ñ$_{1}$ $T_{4}$ °था; $V_{1.3}$ °दा ); $T_{3}$ रक्तेक्षणमुखस्तथा. —$^{c}$) Ñ $B_{1.3.4}$ $D_{6.7.10.11}$ -तनयं; $D_{5}$ -पुत्रं च ( for -पुत्रं तं ).

13 $G_{3}$ om. $13^{ab}$ ( cf. v.l. 11 ). —$^{ab}$) $M_{6}$ स गृह्य ( for प्रगृह्य ). Ñ$_{2}$ $B_{1.3.4}$ $D_{6.7.10.11}$ ततो नानाप्रहरणाञ्छितधारान्सहस्रशः. —For $13^{ab}$, Ś Ñ$_{1}$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3}$ subst.:

578* ततो नानायुधान्याशु शितधाराणि संयुगे ।

[ $V_{3}$ -सुराः पेतुः ( for -[ आ ]युधान्याशु ). $D_{2.5.9}$ शर- ( for शित- ). $V_{3}$ $D_{5}$ -धाराश्च. ]

—Then Ñ$_{1}$ $V_{1.3}$ $D_{1.3-5}$ $T_{3}$ cont.; while Ñ$_{2}$ $B_{1.3.4}$ $D_{6.7.10.11}$ $T_{1.2.4}$ $G_{1}$ M ins. after $13^{ab}$; $G_{3}$ ins. before $13^{cd}$:

579* सुरसैन्येषु संक्रुद्धः पातयामास रावणिः ।

[ $G_{3}$ om. up to the prior half ( cf. v.l. 11 ). Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1.3-7.10.11}$ $T_{3}$ transp. सुरसैन्येषु and पातयामास. ]

—$V_{3}$ om. (hapl.) $13^{cdef}$. —$^{c}$) Ś Ñ$_{1}$ $V_{1}$ $D_{1-5.8.9.12}$ $T_{3}$ नानाप्रहरणान्याशु; Ñ$_{2}$ $B_{1.3.4}$ $D_{6.7.10.11}$ शतघ्नीमुसलप्रास-. —$^{d}$) $V_{1}$ $D_{1.5}$ T $G_{1}$ $M_{1-9}$ गदाः खड्गान्. $D_{5.6.9-11}$ -परस्वधान् ( for °श्वधान् ). —$^{e}$) $G_{1}$ -शिखराणि ( hypm. ) ( for -शृङ्गाणि ). Ś Ñ$_{1}$ $V_{1}$ $D_{1-5.8.9.12}$ $T_{3}$ शैलशृंगाणि च तदा ( $V_{1}$ $T_{3}$ °था ); Ñ$_{2}$ $B_{1.3.4}$ $D_{6.7.10.11}$ महांति गिरि ( $B_{1.3.4}$ चाद्रि )शृंगाणि; $T_{1.2}$ $G_{3}$ $M_{1.3.5-7}$ मुसलान्य-

G. 7. 36. 15 B. 7. 28. 15 L. 7. 34. 15

ततः प्रव्यथिता लोकाः संजज्ञे च तमो महत् ।
तस्य रावणपुत्रस्य तदा शत्रूनभिघ्नतः ॥ १४
ततस्तद्दैवतबलं समन्तात्तं शचीसुतम् ।
बहुप्रकारमस्वस्थं तत्र तत्र स्म धावति ॥ १५
नाभ्यजानंस्तदान्योन्यं शत्रून्वा दैवतानि वा ।
तत्र तत्र विपर्यस्तं समन्तात्परिधावितम् ॥ १६
एतस्मिन्नन्तरे शूरः पुलोमा नाम वीर्यवान् ।
दैतेयस्तेन संगृह्य शचीपुत्रोऽपवाहितः ॥ १७
गृहीत्वा तं तु नप्तारं प्रविष्टः स महोदधिम् ।
मातामहोऽर्यकस्तस्य पौलोमी येन सा शची ॥ १८

(T2 °न)द्रि(G3 °लं तत्र; M6 °लान्यसि) शृंगाणि. —$^f$) M4.7 शस्त्राण्यवकिरद्रणे.

14 $^a$) G1 M3.7 देवाः; Ck.t as in text (for लोकाः). V3 प्रमथितान्देवांस्; T3 M4 प्रव्यथितो लोको. —$^b$) M9 om. च (subm.). M8 समं जज्ञे. D10.11 तमस्ततः; G1 M5.7 ततो महत्; G3 महद्भयं (for तमो महत्). Ś D2.8.12 L (ed.) तमश्च महदाभवत् (L [ed.] °विशत्); Ñ V1 B1.3.4 D1.3–7.9 तमश्च समजायत; V3 तस्मिन्युद्धे सुदारुणात्; M6 तदस्त्रं सृजतो महत्; M10 जयंतः पतितोभवत्. —$^c$) Ś D2.8.9.12 अस्य. T4 रावणि-; M10 राक्षस- (for रावण-). Ñ1 V1.3 D2.5.12 T4 -सैन्यस्य (for -पुत्रस्य). —$^d$) M3 तथा. M10 [अ]मात्यैर् (for शत्रून्). Ś Ñ V1 B1.3.4 D1.3–5.7–12 T4 शत्रु(D4.9.12 शक्र; D5 सुर)सैन्यानि(B4 ज; D1.4 वि; D3 प्र)घ्नतः; V3 राक्षसस्यामितिष्ठतः; D2.6 शक्रसैन्यं विनिघ्नतः; M6 शत्रूनभिजिघांसतः.

15 $^a$) B1 D9 T1.2 G3 M1.10 ततस्तु; T3 तत्रस्थं (for ततस्तद्). M3 तथैव च (for तद्दैवत-). M6 ततो देवबलं तद्वै. —D9 om. (hapl.) 15$^b$ – 16$^a$. —$^b$) Ś Ñ2 V1.3 B1.3.4 D1–5.7.8.12 T3.4 M3.6 स-; M1 तु (for तं). Ñ1 समभिद्रुतं; G (ed.) शरविक्षतं (for तं शचीसुतम्). —$^{cd}$) Ś D8.12 -प्रहारमध्यस्थं; D2 -प्रकारविध्वस्तं (for °मस्वस्थं). T1.2 G3 M1 च; M4 प्र-; M10 [उ]प- (for स्म). M6 प्रविद्रुतं (for स्म धावति). Ś Ñ V1 D1–4.6–8.10–12 अभवत्(Ś D2.8.12 समंता; V1 अपत; D1.3.4 व्यभ्रम)च्छरपीडितं; D5 अभूत्तामसपीडितं; T4 रणे रावणिपीडितं (for $^d$). V3 वज्रप्रहारैरसकृत्पीडयामास दानवान्.

16 D9 om. 16$^{abc}$ (cf. v.l. 15). —$^a$) Ś3 D8 नाभिजानंस्; B1.3.4 नाभिजज्ञुस्; D12 M2.4.7.8 नाभ्यजानात्; G3 न ह्यजानंस्; M6 नाभिजज्ञे; M10 न ह्यजानात् (for नाभ्यजानंस्). T1–3 G3 M3.8 ततो; G1 M5.6 तथा (for तदा). Ñ V1 D5–7.10.11 M1 नाभ्यजानंत चा(M1 ते)न्योन्यं. —$^b$) D1 राक्षसा; T2 शत्रूंर्वै; T3 G1 M3–5.7 शत्रुं वा. G3 M3 च (for second वा). Ś Ñ V1.3 D2.6–8.10–12 T4 रक्षो वा देवतापि(Ñ2 D6.7.10.11 °थ) वा(D2 च); B1.3.4 D3–5 राक्षसा दैवतानि च; M6 शत्रुणाभिप्रपीडितं. —$^c$) Ś D8 तत्र बलं; D5 तत्रासत; D6 ते च तत्र (for तत्र तत्र). Ñ2 B1.3.4 D6.7 विपर्यासात्. —$^d$) D1.3–5 तत्सैन्यं (for समन्तात्). Ś Ñ1 V3 D1–4.7–9.12 T4 पर्यधावत; Ñ2 V1 D5.6.10.11 Ct परिधावत(Ñ2 °तः); B3.4 °वारिताः; T1.2 G3 M1 °धावति; T3 संप्रधावति; M5 अपि धावितं; M10 संप्र° (for परिधावितम्). M3 यतः सैन्यं प्रधावति. ❀ Ct: परिधावत पर्यधावत. ❀ —After 16, Ś Ñ V1.3 B1.3.4 D T4 ins.:

580* देवा देवान्द्विजघ्नुश्च राक्षसा राक्षसांस्तथा।
संमूढास्तमसा छन्ना व्यद्रवन्नपरे तथा।

[(l. 1) V1 transp. देवा and देवान्. Ñ2 B1 D5–7.10.11 ते (for च). D6.7 read राक्षसांस् in marg. Ñ V1.3 D11 राक्षसान्राक्षसास् (by transp.). —(l. 2) Ś D8.12 ते मोह-; D9 संमोहात् (for संमूढास्). B3 चापरे (for तमसा). D2 समूहे ते समाच्छिन्ना (for the prior half). B3 दिशः; K (ed.) तदा (for तथा). Ś Ñ1 V1.3 D1–4.8.9.12 निवर्तंते(Ñ1 V1.3 D1.3.4 न्यवर्तंत) तथा(Ñ1 [with hiatus] इवा)परे; D5 पर्यटंतस्तथा तथा; T4 पतंति स्म तथापरे; G (ed.) व्याद्रवंत परे तथा (for the post. half).]

17 $^a$) Ś Ñ2 V1.3 B1.3 D3.5–8.10–12 T1.2.4 G1 वीरः; B4 D1.2.4.9 T3 वीर; M10 तिष्ठन् (for शूरः). Ñ1 दैत्येयानां महावीरः. —$^c$) Ñ2 B1.3.4 D6.7.9–11 दैत्येंद्रस्; D3 T3 G3 दैत्येन (for दैतेयस्). M8 संहृत्य (for संगृह्य). —$^d$) B1 [ऽ]पराजितः (for ऽपवाहितः). Ś D2.8.9.12 पुलोम्ना चातिवाहितः.

18 $^a$) Ś V1.3 D2.8.9.12 T4 स संगृह्य; Ñ2 B1.3.4 D1.3.4.6.7.10.11 संगृह्य तं(D1.3.4 स); D5 तं गृह्य सः; T3 स संग्राह्य (for गृहीत्वा तं). V3 D9 च (for तु). Ś Ñ2 V1.3 D T2–4 दौहित्रं (for नप्तारं). Ñ1 स तु तं गृह्य दौहित्रं; M6 गृहीत्वा तु स्वनप्तारं. —$^b$) Ś D8.12 प्रविष्टं. Ś Ñ V1.3 B1.3.4 D T3.4 सा(D9 सं)गरं तदा(V1.3 °था) (for स महोदधिम्). —$^c$) M5 मातामहोदयस्(sic). T3.4 M10 [ऽ]पि(T4 हि) तस्य स्या(T3 °स्यासी)त् (for ऽर्यकस्तस्य). Ś D2.8.12 आर्तार्थ सा(D2.8 स) हि तेनासीत्; Ñ V1.3 B1.3.4 D3.5–7.9–11 आर्यकः स हि तस्या(B3 सहितोप्या; D9 सहितश्चा)सीत्; D1.4 सर्व(D4 °र्ग)काले हि तस्यासीत्; M3 आर्यो मातामहस्तस्य. —$^d$) Ñ1 V3 पुलोमी; D10.11 T4 पुलोमा; T3 पौलोमा. L (ed.) [इ]त्येन (sic) (for येन). ❀ Cg: तेन। पुलोम्ना। येन सा शची, उत्पादितेति शेषः। तस्माच्छची पौलोमीति नामवती जातेत्यर्थः।; so also Ck.t. ❀

प्रणाशं दृश्य तु सुरा जयन्तस्यातिदारुणम् ।
व्यथिताश्चाप्रहृष्टाश्च समन्ताद्विप्रदुद्रुवुः ॥ १९
रावणिस्त्वथ संहृष्टो बलैः परिवृतः स्वकैः ।
अभ्यधावत देवांस्तान्मुमोच च महास्वनम् ॥ २०
दृष्ट्वा प्रणाशं पुत्रस्य रावणेश्चापि विक्रमम् ।
मातलिं प्राह देवेन्द्रो रथः समुपनीयताम् ॥ २१
स तु दिव्यो महाभीमः सज्ज एव महारथः ।
उपस्थितो मातलिना वाह्यमानो मनोजवः ॥ २२
ततो मेघा रथे तस्मिंस्तडिद्वन्तो महास्वनाः ।
अग्रतो वायुचपला गच्छन्तो व्यनदंस्तदा ॥ २३
नानावाद्यानि वाद्यन्त स्तुतयश्च समाहिताः ।
ननृतुश्चाप्सरःसंघाः प्रयाते वासवे रणम् ॥ २४
रुद्रैर्वसुभिरादित्यैः साध्यैश्च समरुद्गणैः ।
वृतो नानाप्रहरणैर्निर्ययौ त्रिदशाधिपः ॥ २५

G. 7. 36. 27
B. 7. 28. 27
L. 7. 31. 27

---

19 [a]) Ñ1 V1 D1.4.5.9 M3 प्रेक्ष्य च; T2 G1 तस्य तु; M5 वीक्ष्य च (for दृश्य तु). T2 G3 M8 तदा (for सुरा). Ś D2.8.12 व्रणान्समी(D2.12 °संप्रे)क्ष्य च तदा; Ñ2 B1.3.4 D6.7.10.11 ज्ञात्वा प्रणाशं तु तदा; V3 T3.4 पलायनं प्रे(V3 °यितान्प्रे)क्ष्य सुरा; D3 प्राणान्संप्रेक्ष्य च सुरा. ❀ Cg.k.t : प्रणाशमदर्शनम्. ❀ —[b]) Ś D2.3.8.12 [अ]तिदारुणान्; Ñ1 [अ]पि दारुणं; Ñ2 B1.3.4 D6.7.10.11 [अ]थ देवताः; V1 M1 सुदारुणं; D9 च दारुणं. —M1 om. 19[c] – 20. —[c]) D3 M3 [अ]प्यहृष्टाश्; D9.12 T2 G1 प्रहृष्टाश् (sic) (for [अ]प्र°). Ñ2 B1.3.4 D6.7 भग्नदर्पास्त(B4 °यार्ताश्च त)तः(D6 °दा) सर्वे; D10.11 अप्रहृष्टास्ततः सर्वे. ❀ Cg. k.t : व्यथिताः, अत एवाप्रहृष्टाः(Ck.t : °ष्टाः खिन्नाः). ❀ —[d]) Ñ2 B1.3 D6.7 भयार्ता सं-; B4 भयात्तस्य; D10.11 व्यथिताः सं- (for समन्ताद्वि-). M5 अभि-; M6 प्रति- (for विप्र-). Ś Ñ1 V1.3 D1–5.8.9.12 T3.4 व्यद्रवं(V3 न्यवर्तं)त भयार्दिताः.

20 M1 om. 20 (cf. v.l. 19). —[a]) Ś Ñ1 V1.3 D1–4.8.9.12 T3 चापि; D5 चाथ; T1.2 G1.3 M2.4.5.7.8 त्वपि; M6 त्वभि- (for त्वथ). Ñ B1.3.4 D6.7.10.11 M6 संक्रुद्धो (for संहृष्टो). —[c]) Ñ1 V1.3 D1.3–5 T3.4 च (for तान्). Ś D2.8.9.12 M6 अभ्यधावत्ततो दे(D2 °त्तदा दे; M6 °त्स तान्दे)वान्. —[d]) Ñ1 [इ]व; L (ed.) स (for च). B4 स मुमोच; D1.3–5.9 T3 मुमुचे स(D3 T3 °चेथ; D9 °चे सु-); D2 मुमुचुः सु-. V3 D9 महास्वरं; D1.4 °शरं; D3 °स्वरान् (for महास्वनम्).

21 [a]) Ś2.3 Ñ V1.3 B1.4 D1–5.8.9.12 T3.4 ज्ञात्वा (for दृष्ट्वा). Ñ1 G1 M4.7 विनाशं; T1 M3 प्रकाशं (for प्रणाशं). —[b]) G1 विश्रमं (for विक्रमम्). Ś Ñ1 V1.3 D1–5.8.9.12 T3.4 दे(V1.3 D3 T3.4 दै)वतानां च वि(D8 *न)क्रियां(Ñ1 T3 °क्रमं; V1.3 °क्रियाः); Ñ2 B1.3.4 D6.7.10.11 दैवतेषु च विद्रुतं(B1.3.4 °द्रवं); M6.8 रावणस्यास्य(M8 °पि) विक्रमं. —[c]) Ś1 Ñ2 B1.3 D6.7.10.11 चाह. Ñ2 B1.4 D6.7.10.11 देवेशो (for देवेन्द्रो). —[d]) Ś D1.2.4.5.8 रथं. B1 प्रत्युपनीयतां; D1 मे समुपानय (for समुपनीयताम्).

22 [ab]) B1.3 M10 महान्भीमः. M8 transp. दिव्यो and भीमः. T1.2.4 G3 M1–3.8–10 सद्य (for सज्ज). M6 transp. दिव्यो and सज्ज. —[c]) D1.3–5 हरिहयैर् (for मातलिना). —[d]) D1.3–5 उह्यमानो(D1 om. from मानो up to च in 23[c]); G1 व्यूह्य° (for वाह्यमानो). Ś Ñ1 D2.8.9.12 महारथः; Ñ2 V1 B1.4 D3.4.6.7.10.11 T1–3 M5.8.10 महाजवः(D4 °वैः); V3 महाबलः; D5 M2.7 मनोजवैः (for मनोजवः).

23 D1 om. up to च in 23[c] (cf. v.l. 22). —[a]) Ś3 D8 मेघरवे; B1.4 महारथे; T3 M5 मेघा रणे (for मेघा रथे). —[b]) Ñ2 D6.7.10.11 महाबलाः; B1.3.4 बलाहकाः (for महास्वनाः). Ś Ñ1 V1.3 D1–5.8.9.12 T3 तडिद्गुण(V3 °**; D2.5.9 °द्गण)धराः(D5 °वराः; T3 °वृताः) स्वयं. —[c]) M5 -चलिता; Cg.k.t as in text (for -चपला). —[d]) T1 [ऽ]पि; G1 M2.4.5.9 Ck [ऽ]भि-; M6 हि (for वि-). T2 M10 तथा (for तदा). Ś Ñ1 V1.3 D1–5.8.9.12 T3.4 गच्छं(V1.3 °जं)ति च(Ñ1 V1 D1.3–5 T3.4 स्म) नदंति च; Ñ2 B1.3.4 D6.7.10.11 नेदुः परमनि(D6.10.11 °निः)स्वनाः.

24 [a]) B3 नानावाद्यादि; D2 °द्यान्; D6 °द्याश्च; G1 दानवाद्यानि (for नानावाद्यानि). Ś Ñ2 V1.3 B3.4 D1.2.4.5.7–9.12 T3.4 M3.5.10 [अ]वाद्यंत; T1.2 G1.3 M1.2.4.7–9 वाद्यंते (for वाद्यन्त). B1 नानावाद्यमवाद्यंत. ❀ Ck : वाद्यन्तेति । अवाद्यन्तेति यावत् ।; so also Ct. ❀ —[b]) Ś V1 D8 स्तुतया (sic); D10.11 गंधर्वाश् (for स्तुतयश्). Ñ2 B1.3.4 D6.7 गंधर्वाश्च जगुस्तथा(B3.4 °दा). —[c]) B3 [अ]प्सरःसंघाश्च (hypm.); B4 °रस्तत्र (for °रःसंघाः). Ś D2.8.9.12 नृत्यद्भिश्चाप्सरःसंघैर्. —[d]) Ś D2.8.9.12 निर्यातस्त्रि(Ś2.3 °र्ययौ त्रि; D2 °र्याति त्रि)दशेश्वरः; Ñ V1.3 B1.3.4 D1.3–7.10.11 T3.4 निर्याते त्रिदशे(D6.7 °दिवे)श्वरे.

25 [a]) B3 वज्रैर् (for रुद्रैर्). —[b]) Ś Ñ1 V1.3 D1–5.8.9.12 T3 ऋषिभिः; Ñ2 B1.3.4 D6.7.10.11 अश्विभ्यां (for साध्यैश्च). D1–4.9.12 च (for स-). —[c]) Ñ1 नानाविध- (for वृतो नाना-). D4 -सह रणैर् (sic) (for -प्रहरणैर्). B1 सैन्यैः परिवृतो योद्धुं. —[d]) D4 M10 त्रिदिवाधिपः; M1.6 त्रिदशेश्वरः.

G. 7. 36. 28
B. 7. 28. 28
L. 7. 34. 28

निर्गच्छतस्तु शक्रस्य परुषं पवनो ववौ ।
भास्करो निष्प्रभश्चासीन्महोल्काश्च प्रपेदिरे ॥ २६
एतस्मिन्नन्तरे शूरो दशग्रीवः प्रतापवान् ।
आरुरोह रथं दिव्यं निर्मितं विश्वकर्मणा ॥ २७
पन्नगैः सुमहाकायैर्वेष्टितं लोमहर्षणैः ।
येषां निश्वासवातेन प्रदीप्तमिव संयुगम् ॥ २८
दैत्यैर्निशाचरैः शूरै रथः संपरिवारितः ।
समराभिमुखो दिव्यो महेन्द्रमभिवर्तत ॥ २९
पुत्रं तं वारयित्वासौ स्वयमेव व्यवस्थितः ।
सोऽपि युद्धाद्विनिष्क्रम्य रावणिः समुपाविशत् ॥ ३०
ततो युद्धं प्रवृत्तं तु सुराणां राक्षसैः सह ।
शस्त्राभिवर्षणं घोरं मेघानामिव संयुगे ॥ ३१
कुम्भकर्णस्तु दुष्टात्मा नानाप्रहरणोद्यतः ।
नाज्ञायत तदा युद्धे सह केनाप्ययुध्यत ॥ ३२
दन्तैर्भुजाभ्यां पद्भ्यां च शक्तितोमरसायकैः ।
येन केनैव संरब्धस्ताडयामास वै सुरान् ॥ ३३

26 $^{a}$) Ś $V_{1.3}$ $D_{1-5.8.9.12}$ $T_4$ निर्याणे चापि( $V_3$ चैव ); $\tilde{N}_1$ निर्ययौ चापि(sic); $T_3$ $M_{10}$ प्रतिकूलं तु; $M_2$ विनिर्गते तु; $M_6$ निर्यातस्य तु (for निर्गच्छतस्तु). —$^{b}$) Ś $\tilde{N}_2$ $B_{1.3.4}$ $D_{2.6-12}$ परुषः पवनो; $\tilde{N}_1$ $V_{1.3}$ $D_{1.3-5}$ $T_4$ पवनः परुषो; $G_1$ मारुतः परुषो (for परुषं पवनो). —$^{c}$) $V_1$ $D_{1-5.9.12}$ निःप्रभश्च. $\tilde{N}_2$ $B_{1.3.4}$ $D_{6.7.10.11}$ [ ए ]व (for [ आ ]सीन्). $V_3$ भास्करस्तिमिराक्रांतो. —$^{d}$) $D_9$ ( also ) मरुद्गणैः ( for महोल्काश्च ). $D_8$ पपातिरे.

27 $^{a}$) $D_5$ $T_{1.2.4}$ $G_{1.3}$ $M_{1.3-5.7}$ वीरो ( for शूरो ).

28 $^{a}$) Ś $\tilde{N}_1$ $V_{1.3}$ $D_5$ $T_{3.4}$ $M_4$ सु( Ś स )महावेगैर्; $D_{1.4}$ सहसा घोरैर्; $D_{2.8.9.12}$ सु( $D_8$ स )महानागैर्; $D_3$ $G_1$ °घोरैर्; $T_{1.2}$ $G_3$ $M_{1-3.5.7-10}$ K (ed.) सु( $T_{1.2}$ स; K [ed.] तु ) महाभोगैर् ( for सुमहाकायैर् ). —$^{b}$) $B_{1.3}$ $M_{3.8}$ विष्टितं. Ś $\tilde{N}_1$ $B_4$ $D_{2.8.9.12}$ लोमहर्षणं; $T_1$ $G_1$ $M_{3.4.7}$ रोमहर्षणं; $T_{2-4}$ $G_3$ $M_{1.2.5.6.8-10}$ रोमहर्षणैः. —$^{c}$) $\tilde{N}_1$ $V_{1.3}$ $D_{1.3-5}$ तेषां; $D_{10.11}$ $T_{1.2}$ $G_3$ $M_6$ एषां ( for येषां ). Ś $\tilde{N}_2$ $V_{1.3}$ $B_{1.3.4}$ $D_{5.7-9.11.12}$ T निःश्वासवातेन. —$^{d}$) $B_3$ $D_{10.11}$ $G_1$ संयुगे; $D_{1.3-5}$ सर्वतः ( for संयुगम् ). Ś $D_8$ दीप्यते सचराचरं; $\tilde{N}_1$ $V_{1.3}$ $D_{2.9.12}$ $T_3$ $M_2$ प्रदीप्त इव सर्वतः( $V_3$ सर्वशः; $M_2$ संयुगे ).

29 $B_3$ om. ( hapl. ) 29–31. —$^{a}$) $G_3$ दीप्तैर् ( for दैत्यैर् ). $\tilde{N}_2$ $B_1$ $D_{6.7.10.11}$ $M_{10}$ चैव; $V_3$ भीमैर्; $B_4$ घोरैः; $G_3$ क्रूरै ( for शूरै ). —$^{b}$) Ś $D_{2.8.12}$ $G_1$ $M_{3.5.8}$ रथः सः; $\tilde{N}_2$ $B_{1.4}$ $D_{1.3-7.10.11}$ $T_{3.4}$ स रथः; $V_3$ अन्यैः सं- ; $D_9$ रथैः सः; $T_{1.2}$ रथस्थः; $M_{2.9}$ रथैः सं-. —After $29^{ab}$, $D_3$ ins. :

581* ततो भेरीनिनादांश्च स्फुटकोलाहलानि च ।
सहस्त्रं त्रिंशद्वाद्यन्ते निर्गते राक्षसाधिपे ।
राक्षसैर्बहुभिर्युक्तो निहन्तुं सोऽभ्यवर्तत ।

—$^{c}$) $D_{1.4}$ $M_8$ दैत्यो; $T_{3.4}$ वीरो ( for दिव्यो ). —$^{d}$) Ś $\tilde{N}_1$ $V_{1.3}$ $D_{1.2.4.5.8.9.12}$ $T_{3.4}$ चाभ्यवर्तत; $\tilde{N}_2$ $B_4$ $D_{6.7.10.11}$ सोभ्य°; $B_1$ $M_{6.7}$ सम°; $D_3$ प्रति राक्षसः; $M_{1.5.10}$ अभिवर्तते; $M_3$ त्वभ्य° ( for अभिवर्तत ).

30 $B_3$ om. 30 ( cf. v.l. 29 ). $D_5$ om. $30^{ab}$. —$^{a}$) $D_1$ पुत्रं च; $D_{3.4}$ $M_3$ पुत्रं स्वं; $T_4$ स्वपुत्रं; $G_{1.3}$ $M_{1.2.4.5.7-10}$ पुत्रस्तं ( for पुत्रं तं ). Ś $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ च; $\tilde{N}_2$ $B_{1.4}$ $D_{6.7.10.11}$ तु; $M_{3.10}$ [ आ ]जौ ( for [ अ ]सौ ). —$^{b}$) $G_1$ एवं. $D_{1.3.4}$ [ अ ]भ्यवर्तत ( for व्यवस्थितः ). —$M_{10}$ om. $30^{c}$–31. —$^{c}$) $D_2$ युद्धाय ( for °द्वि- ). $V_3$ तमसागम्य ( corrupt ); $D_{3.10}$ हि निष्क्रम्य; $T_4$ समागम्य ( for विनिष्क्रम्य ). $B_{1.4}$ पूर्वं( $B_4$ द्वंद्वं ) स चापि विक्रम्य; $M_6$ ततः प्रदिशतस्तस्य. ❀ Ct : युद्धाद्युद्धस्थानात्. ❀ —$^{d}$) $M_2$ रावणः ( sic ); $M_{7.8}$ रावणं ( for रावणिः ).

31 $B_3$ $M_{10}$ om. 31 ( cf. v.l. 29 and 30 respy. ). —$^{a}$) $Ś_3$ $D_6$ प्रवर्ततु ( sic ); $B_1$ $G_3$ प्रवृद्धं तु( $G_3$ तत् ); $D_{1-4}$ T $G_1$ $M_{1-4.6.8.9}$ °त्तं तत्; $M_5$ समभवत् ( for प्रवृत्तं तु ). —$^{b}$) $D_{1.3.4}$ transp. राक्षसैः and सह. —$^{c}$) $M_{2.8.9}$ -वर्षं घोरं तत् ( for -वर्षणं घोरं ). Ś $\tilde{N}_1$ $V_1$ $D_{1-5.8.9.12}$ $T_3$ नानाशस्त्रविवर्षू( Ś $D_8$ °विचक्षू [ sic ]; $D_1$ °प्रहर्षा; $D_3$ °विवक्षू; $D_4$ °ववर्षा; $T_3$ °प्रवर्षा )णां; $\tilde{N}_2$ $D_{6.7.10.11}$ K ( ed. ) शस्त्राणि वर्षतां तेषां( $D_{10}$ °तो मेघा [ sic ]; K [ ed. ] °तां घोरं ); $V_3$ नानाशस्त्रैः प्रवर्षूणां; $B_1$ शस्त्राणि ववृषेपूणां( sic ); $T_4$ $M_6$ नानाशस्त्राभिवर्षाणां( $M_6$ °णि वर्षतां ). —$^{d}$) $D_{10}$ reads मेघाना in marg.

32 $^{a}$) Ś $V_3$ $D_8$ च दुष्टात्मा; $B_3$ दुरात्माथ. —$^{b}$) $D_5$ $M_5$ नानाप्रहरणैर्यु( $M_5$ °र्वृ )तः. ❀ Cg.k.t : नानाप्रहरणोद्यतः, उद्यतनानाप्रहरणः. ❀ —$^{c}$) Ś $D_{8.12}$ प्रास्था( $D_{8.12}$ * * )-पयत्; $D_{1.2.4}$ न ज्ञायते; $D_3$ वज्राहतस्; $M_8$ नाभिज्ञाय; L ( ed. ) समुपायात्; Cg.k.t as in text ( for नाज्ञायत ). $\tilde{N}$ $V_3$ $B_{1.3.4}$ $D_{6.7.10.11}$ तदा राजन्; $D_{1.4}$ महायुद्धे. —$^{d}$) $G_{1.3}$ $M_4$ केनाभि- ; $M_{2.3.5.7}$ तेनापि; Cg.k as in text ( for केनापि ). $T_{1.2}$ [ अ ]पद्यत. Ś $V_1$ $D_{1-5.8.9.12}$ $T_{3.4}$ गच्छन्नेवा( $V_1$ $D_{1.2.5.9}$ $T_{3.4}$ °छन्केना; $D_{3.4}$ °च्छेत्केना )प्यसौ बली; $\tilde{N}$ $V_3$ $B_{1.3.4}$ $D_{7.10.11}$ Ct युद्धं( $\tilde{N}_1$ युद्धे; $B_4$ द्वंद्वं ) केनाभ्यपद्यत; $D_6$ युद्धे केन ह्ययुध्यत.

33 $^{a}$) Ś $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ हस्त( $Ś_2$ °स्तैः )-पादैः शिला( $D_5$ °दैस्तथा )वृक्षैः; $\tilde{N}_2$ $B_{1.3.4}$ $D_{6.7.10.11}$ दंतैः पादैर्भुजैर्हस्तैः( $B_3$ °जैः पुष्टैः ); $M_9$ स तैर्भुजाभ्यां पा * भ्यां. —$^{b}$) $\tilde{N}_2$ $B_{1.3.4}$ $D_{6.7.10.11}$ -मुद्गरैः; $T_2$ -साधकैः; $M_6$ -मुष्टिभिः ( for -सायकैः ). $V_3$ $T_3$ शक्तिसायकतोमरैः. —$^{c}$) Ś $\tilde{N}$ $V_{1.3}$ $B_{1.3}$ $D_{1-4.7-12}$ $T_{3.4}$ $M_{2.6.7}$ तेन; $B_4$ $D_5$ येन;

ततो रुद्रैर्महाभागैः सहादित्यैर्निशाचरः ।
प्रयुद्धस्तैश्च संग्रामे कृत्तः शस्त्रैर्निरन्तरम् ॥ ३४
ततस्तद्राक्षसं सैन्यं त्रिदशैः समरुद्गणैः ।
रणे विद्रावितं सर्वं नानाप्रहरणैः शितैः ॥ ३५
केचिद्विनिहताः शस्त्रैर्वेष्टन्ति स्म महीतले ।
वाहनेष्ववसक्ताश्च स्थिता एवापरे रणे ॥ ३६
रथान्नागान्खरानुष्ट्रान्पन्नगांस्तुरगांस्तथा ।
शिंशुमारान्वराहांश्च पिशाचवदनांस्तथा ॥ ३७
तान्समालिङ्ग्य बाहुभ्यां विष्टब्धाः केचिदुच्छ्रिताः ।
दैवैस्तु शस्त्रसंविद्धा मम्रिरे च निशाचराः ॥ ३८

G. 7. 36. 40
B. 7. 28. 40
L. 7. 34. 41

D3 ∗न ( for केन ). Ś Ñ V1.3 B1.3.4 D T3.4 M7 [ ए ]व संक्रुद्धस; M5 च संरब्धस. —$^{d}$ ) Ś D2.8.9.12 वै परान् ; Ñ1 V1.3 सोपरान्; Ñ2 B1.3.4 D6.7.10.11 देवताः; D1.3-5 सोमरान्; T3 सोसु° ( sic ); M6 तान्सु° ( for वै सुरान् ).

34 $^{ab}$ ) V1 B3.4 स तु ( for ततो ). Ñ V3 B1 D1.3.4. 6.7.10.11 T3.4 स तु रुद्रैर्महावेगैः( Ñ2 D6.7.10.11 °घोरैः; B1 °र्भीमैस् ) ( for $^{a}$ ). Ñ1 सह सार्धैर् ; Ñ2 D7.10.11 संगम्याथ; V1.3 T3 M7 सह सार्धैर् ; B1 ताडितोथ; B3.4 ससैन्योथ; D1.3.4 सह सैन्यैर् ; D6 सैन्यनाथैर् ; G1 M4 सह दैत्यैर् ; M6 सहसैन्यो ( for सहादित्यैर् ). Ñ1 V1.3 महाबलैः( Ñ1 °लः ) ; B4 T1.2 G1 निशाचरैः( for °चरः ). Ś D2.5.8.9.12 स तु रुद्रैः समागम्य वसुभिश्च तथा विभो( D5 °थाश्विभिः ). —B1 om. ( hapl.; see var. ) 34$^{c}$–36$^{b}$. —$^{c}$ ) Ś V1 D5.8.12 प्रयुद्धं; D6 प्रयुक्तैस; D7 प्रयुद्धैस; T3 M6 प्रयुध्यन् ; T4 प्रविद्धैस ; M3 प्रयुध्य; G ( ed. ) युयुत्सुस ( for प्रयुद्धस ). V1 चैव; V3 तैस्तु ( for तैश्च ). —$^{d}$ ) Ś D8.12 कृतमस्त्र-; Ñ1 B3.4 D3 T2.3 G3 M6 कृतशस्त्रैर् ; Ñ2 D5-7.10.11 क्षतः श°; V1 कृतं श° ; D2 कृतं शस्त्रं ; D9 कृत्तः शस्त्र- ; T4 वृतः शस्त्रैर् ; G1 सहयुद्धैर् ; M4.5 कूटयुद्धैर् ; M10 क्रूररूपैर् ( for कृत्तः शस्त्रैर् ). B3.4 D1.3.9 M7 निरंतरः. —After 34, Ś Ñ1 V1.3 D1-5.8.9.12 T3.4 ins. :

582* असृक्क्षरन्कुम्भकर्णस्तदा शस्त्रार्दितो बभौ ।
सहार्कविद्युत्स्तनितो धाराभिरिव तोयदः ।

[ ( l. 1 ) Ś Ñ1 D8.12 असृग्व्याप्तः. Ś D8 शस्त्रादिभिर् ; D1.4. 9.12 °र्चितो; D3 °न्वितो ( for शस्त्रार्दितो ). V3 स तदा ∗र्दितो बभौ; D5 तु शस्त्रास्त्रचितो बभौ ( for the post. half ). —( l. 2 ) Ś D8.12 सहैव; Ñ1 D1.4 T3.4 स सार्क- ; V3 स चार्क- ( for सहार्क- ). V3 D3 -विद्युत्स्वनितो. D1.3.4 T3.4 धारावान् ( for °भिर् ). V1 धातुमानिव पर्वतः ( for the post. half ). ];

while T1.2 G1.3 M ins. after 34 :

583* बभौ शस्त्राचिततनुः कुम्भकर्णः क्षरन्नसृक् ।
विद्युत्स्तनितनिर्घोषो धारावानिव तोयदः ।

[ ( l. 1 ) M5 बहु- ( for बभौ ). M8 शस्त्रांकित-. M6 महाबलः ( for क्षरन्नसृक् ). —M6 om. l. 2. —( l. 2 ) G1 धारावाही ( for °वान् ). ]

—Then M5 cont. :

584* व्यथितश्चाप्रहृष्टश्च समन्तादभ्यधावत ।

35 B1 om. 35 ( cf. v.l. 34 ). —$^{a}$ ) Ñ1 राक्षसबलं. —$^{b}$ ) Ś Ñ2 B3.4 D1-5.8.9.12 दैवतैः; D6.7.10.11 प्रयुद्धं ( for त्रिदशैः ). Ñ1 V1 T3.4 देवताः समरुद्गणाः; V3 देवानां समरुद्गणान्( sic ). —$^{c}$ ) T4 शस्त्रैर् ( for रणे ). Ś D8.12 व्यद्राव्यत; D1-4.9 व्यद्रावत( sic ); T3.4 व्य( T3 वि )द्रावयन् ; M1.2.4.5.7-9 विदारितं ( for विद्रावितं ). Ś D1-5 8. 9.12 मुहुर् ( for सर्वं ). V1 रणे मुहुर्व्यद्रवंश्च; V3 ∗∗व्यद्राव्य तान्सर्वान्. —$^{d}$ ) Ś Ñ V1.3 B3.4 D T4 तदा ( for शितैः ).

36 B1 om. 36$^{ab}$ ( cf. v.l. 34 ). —$^{a}$ ) M5 विदारिताः ( for विनिहताः ). Ś Ñ V1.3 B3.4 D1-9.12 T3.4 M10 भूमौ; D10.11 कृत्ताश् ( for शस्त्रैर् ). —$^{b}$ ) D10.11 चेष्टंति स्म; M3-5.7 वेष्टंते स्म; M6 वेष्टयंति ( for वेष्टन्ति स्म ). Ś Ñ1 V1.3 D1-5.8 9.12 T3.4 व्य( Ś3 D8.9 12 व्या )चे-( T3.4 °वे )ष्टंत( D1.3.4 विचेष्टंते ) तथापरे; Ñ2 B3.4 व्यचेष्टंत निशाचराः. —V3 om. 36$^{cd}$. —$^{c}$ ) Ñ V1 D1-5.9 T3.4 वाहनानि; Cv as in text ( for °नेषु ). Ñ V1 D1-4.9 T3.4 [ अ ]वसन्नानि; B1.3 °क्ता ये; B4 [ अ ]थ संसक्ताः; D5 च संत्यज्य; M6 [ ए ]व संरब्धाः; M8 [ अ ]न्वसक्ताश्च; Cv च सक्ताश्च ( for [ अ ]वसक्ताश्च ). —$^{d}$ ) G1 ये वा ( for एव ). Ś D8.12 [ आ ]यते रणे; B1.3.4 [ अ ]परे तथा; D1.3.4 [ उ ]परेमिरे; D5 [ उ ]पपेदिरे; M1 परा रणे ( for [ अ ]परे रणे ). Ñ V1 T3.4 स्थितान्येवाव( Ñ1 T3 °वाप; V1 °वोप )पेदि( Ñ2 °तस्थि )रे; D2.9 स्थि( D9 हि )त्वा चैवोपपेदिरे; M6 केचित्तेष्वेव विष्ठिताः; Cv as in text ( for $^{d}$ ).

37 $^{a}$ ) Ś D8.12 यथा; Ñ1 हयान् ; Ñ2 B1.3.4 केचिन् ; V1 D1-5.9 T4 तथा ( for रथान् ). ❀ Cg : रथानित्यादिश्लोकद्वयमेकं वाक्यम्. ❀ —$^{b}$ ) Ñ1 कुररान् ; B3 मृगांस्तु; T3.4 पतंगान् ( for पन्नगांस् ). Ñ1 D9 T3.4 उरगांस् ( for तुर° ). T1.2 G3 M1.3 रणे ( for तथा ). —D1.5 om. ( hapl. ) 37$^{cd}$. —$^{c}$ ) Ś Ñ V1.3 B1.3.4 D2-4.6.8-12 शिशुमारान्. —$^{d}$ ) Ś1 -वदनांस्तदा; D6.7.10.11 M6 °नानपि; T2 G1.3 M1.2.4.5.7-10 °नानि च ( for °नांस्तथा ). ❀ Cv : पिशाचवदनानि पिशाचवाहनानीति च शेषः. ❀

38 $^{a}$ ) Ñ2 B1.3.4 आलिंग्य ( for तान्सम्- ). G1 हस्ताभ्यां ( for बाहुभ्यां ). Ś Ñ1 V1.3 D1-5.8.9.12 T3.4 आलिंग्य बाहुभिस्तांस्तान्. —$^{b}$ ) V1 विष्टब्धान् ; D2 निष्टब्धाः ; D5 विश्रब्धान् ; D8 वि∗∗ ; D9 विनष्टाः ; M7 निष्टब्धाः ; Cv.g.k.t as in text ( for विष्टब्धाः ). D3.9 कैश्चिद् ; D6 किंचिद्. Ś Ñ1 V1.3 D1-5.8.9.12 T3.4 आहवे; D6.7.10.11 Ct उच्छ्रिताः ; G3 उद्धृताः ; M10 आस्थिताः ; Cv.g.k.t as in text ( for

G. 7. 36. 41
B. 7. 28. 41
L. 7. 34 42

चित्रकर्म इवाभाति स तेषां रणसंप्लवः ।
निहतानां प्रमत्तानां राक्षसानां महीतले ॥ ३९
शोणितोदकनिष्यन्दा कङ्कगृध्रसमाकुला ।
प्रवृत्ता संयुगमुखे शस्त्रग्राहवती नदी ॥ ४०
एतस्मिन्नन्तरे क्रुद्धो दशग्रीवः प्रतापवान् ।
निरीक्ष्य तद्बलं सर्वं दैवतैर्विनिपातितम् ॥ ४१
स तं प्रतिविगाह्याशु प्रवृद्धं सैन्यसागरम् ।
त्रिदशान्समरे निघ्नञ्शक्रमेवाभ्यवर्तत ॥ ४२
ततः शक्रो महच्चापं विस्फार्य सुमहास्वनम् ।
यस्य विस्फारघोषेण स्वनन्ति स्म दिशो दश ॥ ४३
तद्विकृष्य महच्चापमिन्द्रो रावणमूर्धनि ।
निपातयामास शरान्पावकादित्यवर्चसः ॥ ४४
तथैव च महाबाहुर्दशग्रीवो व्यवस्थितः ।
शक्रं कार्मुकविभ्रष्टैः शरवर्षैरवाकिरत् ॥ ४५

उच्छ्रिताः). Ñ2 विष्ठितानेकशः स्थितान्; B1 विष्ठिता एकशः स्थिताः; B3.4 विष्टभ्यानेकसंस्थितान्; G (ed.) विष्टब्धा एव संस्थिताः. —ᶜ) B3.4 दैवतैः; G1 M4.5.7 देवैश्च; M6 देवैभिः (for दैवैस्तु). D6.7 -संविग्नाः; D10.11 -संसिग्नाः; Cv as in text (for -संविद्धाः). Ś Ñ1 V1.3 D1-5.8.9.12 T3.4 दैवतैः सह संरब्धा(D5 °रब्धो; T3 °बद्धा); Ñ2 दैवतैः शस्त्रसंछिन्ना; B1 नादेवतैः समं विद्धा (sic). —ᵈ) T1.2 G3 M10 अभिपेतुर्; G1 दुद्रुवुश्च; M5 समरे च; Ck.t as in text (for मम्रिरे च). Ś1.3 Ñ V1.3 D1-4.8.9.12 T3 राक्षसा विललंबि(D9 °लापि)रे; B1.3.4 राक्षसा उपपेदिरे; D5 राक्षसो विमलेंबरे; T4 राक्षसा मम्रिरे तदा.

39 ᵃᵇ) B3 -वदाभाति; M3 [इ]व चा°; M6 [इ]व च बभौ (for इवाभाति). V3 B4 तेषां स,(by transp.); B3 तेषां स्मः D5 स एषां; D6.7.10.11 G1 M4.7 सर्वेषां. Ś3 D8.12 -संभवः; B4 -विप्लवः (for -संप्लवः). B1 विचित्रकर्मवद्भाति तेषां समरविप्लवः. ❀ Cg: चित्रकर्म इवेति वाक्ये संधिरनित्यः।; Ck.t: चित्रकर्म इवेत्यसंधिरार्षः. ❀ —ᶜ) Ś1.3 D8.12 T3 प्रविद्धानां; Ś2 Ñ V1.3 B4 D1.3-5.9 प्र(D1.3.4 तु)वृद्धानां; B1 D6.7.10.11 प्रसुप्तानां; B3 प्रवर्तानां (sic); D2 T3 प्रवृत्तानां; M6 प्रभग्नानां (for प्रमत्तानां).

40 ᵃ) D6.7.10.11 -निष्पंदा; M1 -निष्यंद-; M4.6.7-विष्यंदा (for -निष्यन्दा). Ś Ñ V1.3 B1.3.4 D1-5.8.9.12 तोय-(D9 वाप[sic])शोणितविस्रं(Ñ B3 °निष्पं; D5.9 °विस्रं)दा (B1 °निष्पन्ना; D1.4 °विष्पंद-; D3 °विस्यंद-). —ᵇ) Ś Ñ2 V1 B1.3.4 D2.8.9.12 कंककूर्म-; V3 चर्मवर्म-; D1.3.4-[उ]ल्कगृध्र-; D5 हयकूर्म-; D6.7.10.11 T3.4 M2.8.9 काकगृध्र-; M6 कंककाक-; M10 काककंक- (for कङ्कगृध्र-). —ᶜ) Ś B3 D1-5.8.9.12 T4 M6 संयुगतले; Ñ1 V1.3 °गात्तसात्; Ñ2 B1.4 °गे तत्र(B1 °स्त्र) (for °गमुखे). —ᵈ) D2 साब्र- (for शस्त्र-). T2 सती (sic) (for नदी).

41 For 41ᵃᵇ cf. 27ᵃᵇ. —ᵃ) B4 वीरो (for क्रुद्धो). —ᶜ) D1.3.4 T3.4 निरेक्षत. Ñ1 च बलं; V3 वचनं (sic); D6.7.10.11 तु बलं (for तद्बलं). T1.2 G3 M2.3.5.6.8.9 कृत्स्नं (for सर्वं). Ñ2 B1.3.4 अपश्यद्बलमात्मीयं. —ᵈ) Ñ2 B1.3.4 त्रिदशैर्; M6 देवैमिर् (for दैवतैर्).

42 ᵃ) T2 G3 M3 तु; M1.2.6-10 तत् (for तं). Ś Ñ1 D1-4.8.9.12 सोथ तत्प्रतिगृ(D1.3.4 °विगा)ह्याशु; Ñ2 B1.3.4 स तु तं प्रविगाह्याशु(B3 °गृह्याथ); V1 सोपि संप्रतिगृह्याथ; V3 संबोध्य तं प्रगृह्याथ; D5 सोथ तत्प्रविविश्याशु; T3 सोथ संप्रविगाह्याशु. —ᵇ) Ñ2 B1.3.4 महांतं; M6 रावणः (for प्रवृद्धं). —ᶜ) Ś Ñ1 V1.3 D1-5.8.9.12 T3.4 देवताः समभिघ्नंश्च (Ñ1 V1.3 D1.4.9 T3.4 °भिघ्नन्वै; D2.5 °भिघ्नंस्तं; D3 °निघ्नानः); Ñ2 B1.3.4 देवताः समतिक्रम्य. —ᵈ) M6 शत्रुम् (for शक्रम्). Ñ2 B1.3.4 D1-5 T4 [अ]भ्य(B3 [अ]भि)धावत; D8 [अ]भिवर्तत; D9 च धावत (for [अ]भ्यवर्तत). Ñ1 V1.3 शक्रं समभिधावत.

43 ᵃ) D9 तद्विकृष्य; K (ed.) आगाच्छक्रो (for ततः शक्रो). D6 महाचापं. —ᵇ) M6 अगृह्णात् (for विस्फार्य). T1.2 स; M10 च (for सु-). M7 सुमहत्स्वनं. Ś Ñ V1.3 B1.3.4 D1-5.8.9.12 T4 स्य(V1.3 D1.3-5 वि)स्फारयदनुत्तमं. —ᶜ) V1.3 T3.4 तस्य. D10 T3 विस्फार्य (sic) (for विस्फार-). Ś B1 D2.8.9.12 -शब्देन; Ñ2 illeg.; B3 -धनुषः (sic); D6.7 -निर्घोष; D10.11 -निर्घोषैः; M10 -निर्घोषात् (for -घोषेण). —ᵈ) B3.4 D5.10.11 T1 M1-3.8.9 स्तनंति; D6.7 स्तनति. Ś Ñ1 V1.3 D1-5.8.9.12 [इ]व; T3 वि- (for स्म). M6 स्वनवंति. —After 43, Ñ1 V1.3 D1.3-5 T3.4 ins.:

585* उग्रं परमनाधृष्यं भयदं सर्वविद्विषाम्।

[T3 अधृष्यं च (for अनाधृष्यं).]

44 ᵃ) V3 स (for तद्). D3 महाचापं; D8 महांश्चापं. —ᵇ) Ś Ñ2 V1.3 B1.3.4 D1-5.8.9.12 -वक्षसि; M6 -राक्षसे (for -मूर्धनि). Ñ1 ववर्षेंद्रोथ रावणं. —ᶜ) D6.7.10.11 M1.5.10 पातयामास स (M5 च). Ś Ñ V1.3 B1.3.4 D1-5.8.9.12 तदा (for शरान्). V3 तथाभिपातयामास; T3 निवासयामास शतं. —ᵈ) M6 -संनिभान् (for -वर्चसः). Ś Ñ V1.3 B1.3.4 D1-5.8.9.12 T3 G3 शरा(G3 शिता)न्पावकसंनिभान् (D1.3-5 G3 °वर्चसः). —After 45, D3 ins.:

586* ते वासवधनुर्भ्रष्टाः शराश्चाशनिसंनिभाः।
विशन्ति रावणं तूर्णं सूर्यांशव इवाचलम्।

45 ᵃ) D1.4 महाबाहो. —ᵇ) D6.7.10.11 निशाचरः; T3.4 प्रतापवान् (for व्यवस्थितः). —ᶜ) Ś M10 -निर्मुक्तैः;

प्रयुध्यतोरथ तयोर्बाणवर्षैः समन्ततः । | नाज्ञायत तदा किंचित्सर्वं हि तमसा वृतम् ॥ ४६

इति श्रीरामायणे उत्तरकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

## २९

ततस्तमसि संजाते राक्षसा दैवतैः सह ।
अयुध्यन्त बलोन्मत्ताः सूदयन्तः परस्परम् ॥ १

ततस्तु देवसैन्येन राक्षसानां महद्बलम् ।
दशांशं स्थापितं युद्धे शेषं नीतं यमक्षयम् ॥ २

G. 7. 37. 0
B. 7. 29. 2
L. 7. 35. 3

D9 -निसृष्टैः ; D12 -विसृष्टैः ( for -विभ्रष्टैः ). —$^d$ ) D1 अवाच्छिनत् ( for °किरत् ). —After 45, D8 ins. :

587* इन्द्रारिबाणैः संक्रुद्धश्चकासे रणसंस्थितः ।
स्वरश्मिभिरिव सूर्यो यथा नभसि संस्थितः । [ sic ] ;

while T3 ins. :

588* ततस्तस्मिन्नयुध्यन्त राक्षसा दैवतैः सह ।

46 $^{ab}$ ) D6 प्रवृद्धतोर् ( for प्रयुध्यतोर् ). Ś Ñ1 V1 D1-5.8.9.12 T3 ततस्तेषां प्रवृ( D1.3.4 °यु )द्धानां; Ñ2 V3 B1.3.4 G ( ed. ) ततः प्रवर्षिणो( V3 B3 प्रविष्टयो; B1 °श्च प्रविद्धयो [ hypm. ] ; B4 प्रवर्षतो; G [ ed. ] प्रवृष्टयो )स्तत्र ( for $^a$ ). Ñ2 B1.3.4 शर- ( for बाण- ). M6 प्रवृद्धयोर्बाणवर्षैः समंतादसिपूरितं. —$^c$ ) D1.4.6 न ज्ञायत; D8 नाक्षयेत ( sic ) ; T1.2 G3 न ज्ञायते. —$^d$ ) Ñ1 V1 तु; V3 M6 तद् ; Ck.t as in text ( for हि ). V3 रजसा ( for तमसा ). Ñ2 B1.3.4 तमसा सर्वतो वृते( B3 °तं ).

Colophon : V1 om. ( cont. the Sarga ). —*Kāṇḍa name* : Ś1 D4.9 M7 om. —*Sarga name* : Ś1 Ñ1 D2.8.9 इंद्ररावणसमागमः( Ñ1 °मनं ) ; Ś2.3 रावणसमागमः ; Ñ2 B1.3 D6 इंद्ररावणयोर्युद्धं; V3 रावणेंद्रसमागमः ; B4 इंद्ररावणयोर्द्वैरथयुद्धं ; D1.3.4.12 इंद्रसमागमः ; D5 देवासुरसंग्रामे इंद्ररावणसमागमः ; D7 रावणयुद्धं ; G ( ed. ) इंद्ररावणयोर्द्वैरथः. —*Sarga no.* ( figures, words or both ) : Ś Ñ V3 B1.2 D2.12 om. ; B4 36 ; D1.4.5 35 ; D3.9 T4 34 ; D8 T3 33 ; M6 32. —After colophon, T4 concludes with श्रीरामार्पणमस्तु; G1.3 M1.5.8 with श्रीरामाय नमः ; M10 with श्रीरामचन्द्राय नमः .

**29**

☞ V2 G2 missing for Sarga 29 ( cf. v.l. 7.12. 2 and 7.26.45 respy. ). B2 om. Sarga 29 ( cf. v.l. 7.24.1 ). V1 cont. the previous Sarga. D12 begins with ॐ.

1 $^a$ ) Ś Ñ V1.3 B1.3.4 D2.3.5.8.9.12 T4 तस्मिंस्तमोभूते; D1.4 तस्मिंस्तदा जाते ( for तमसि संजाते ). —$^b$ ) D1 रक्षसां. Ñ2 B1.3.4 त्रिदशैः ( for दैवतैः ). D10.11 सर्वे ते देवराक्षसाः( = 3$^b$ ); M8 राक्षसास्त्रिदशा अपि. —M6 om. ( hapl. ? ) 1$^c$-3$^b$. —$^c$ ) M10 अवध्यंत; B ( ed. ) आयुध्यंत. —For 1$^{cd}$, Ś Ñ V1.3 B1.3.4 D1-5.8.9.12 G ( ed. ) subst.; while T3 ins. after 1 :

589* प्रयुद्धान्स्वान्परांश्चैव पोथयन्तो विचक्रमुः ।

[ Ñ1 युयुध्वंतः; Ñ2 B1.3.4 प्रयुद्धाः स्वान् ; G ( ed. ) प्रमुग्धाः स्वान्. Ñ V3 B1.3 D1.4 T3 यो( T3 बा )धयंतो ( for पोथ° ). Ñ1 प्र-; B1 हि ( for वि- ). ]

—Thereafter all the above MSS. ( except B1.3.4 ) cont.; while T4 ins. after 1 :

590* चक्रशूलगदाबाणास्तोमराशनिशक्तयः ।
राक्षसामरनिर्मुक्ताः सूदयन्तीतरेतरम् ।

[ ( l. 1 ) Ñ V1.3 T3.4 -प्रासमुसलानि च ( Ñ °लाशनि- ) ( for -बाणास्तोमराशनि- ). V1 सर्वशः ( for -शक्तयः ). —( l. 2 ) D5 -निर्वृत्ताः ( for -निर्मुक्ताः ). Ñ2 रक्षोगणविनिर्मुक्ताः ( for the prior half ). ]

2 M6 G ( ed. ) om. 2 ( for M6, cf. v.l. 1 ). D7.10.11 M9 om. ( hapl. ), B ( ed. ) reads within brackets 2-3. —$^a$ ) B3 च; M2.4.7.8.10 तद् ( for तु ). Ś Ñ V1.3 B1.4 D1-5.8.9.12 T3.4 ततो दैवतसैन्येन( Ñ1 T3 °न्यैस्तु; V1.3 D1 °न्यैस्तद्; D3.4 °न्यं तद् ). —$^b$ ) Ñ1 महात्मनां; B1.3.4 बलं तदा; T3 महद्वयं; G1 M4 महाबलं ( for महद्बलम् ). —$^c$ ) B1.4 दशास्य-; D2.9 दिशः( D9 °शं ) प्र-; D5 देशं प्र- ( for दशांशं ). Ś Ñ V1.3 D1.3.4.8.12 T3.4 दिशः प्र( Ñ1 D1.3.4 °शो वि )द्रावितं ( for दशांशं स्थापितं ). —G3 om. ( hapl. ? ) 2$^d$-3$^a$. —$^d$ ) Ś Ñ V1.3 B1.3.4 D1-5.8.9.12 T3.4 सर्वं ( for शेषं ).

G. 7.37.2
B. 7.29.2
L. 7.35.4

तस्मिंस्तु तमसा नद्धे सर्वे ते देवराक्षसाः ।
अन्योऽन्यं नाभ्यजानन्त युध्यमानाः परस्परम् ॥ ३
इन्द्रश्च रावणश्चैव रावणिश्च महाबलः ।
तस्मिंस्तमोजालवृते मोहमीयुर्न ते त्रयः ॥ ४
स तु दृष्ट्वा बलं सर्वं निहतं रावणो रणे ।
क्रोधमभ्यागमत्तीव्रं महानादं च मुक्तवान् ॥ ५

क्रोधात्सूतं च दुर्धर्षः स्यन्दनस्थमुवाच ह ।
परसैन्यस्य मध्येन यावदन्तं नयस्व माम् ॥ ६
अथैतांस्त्रिदशान्सर्वान्विक्रमैः समरे स्वयम् ।
नानाशस्त्रैर्महासारैर्नाशयामि नभस्तलात् ॥ ७
अहमिन्द्रं वधिष्यामि वरुणं धनदं यमम् ।
त्रिदशान्विनिहत्याशु स्वयं स्थास्याम्यथोपरि ॥ ८

---

3 $M_6$ om. $3^{ab}$ (cf. v.l. 1). $D_{7.10.11}$ $M_9$ om. 3; $G_3$ om. $3^{a}$; B (ed.) reads 3 within brackets (for all, cf. v.l. 2). —$^{a}$) $D_6$ $T_1$ $M_{1.3}$ युद्धे; $G_1$ [आ]रब्धे (for नद्धे). —$^{b}$) $G_1$ $M_{10}$ सर्वतो (for सर्वे ते). ❀ Ck.t: देवाश्च राक्षसाश्च देवराक्षसाः. ❀ —$^{c}$) $D_6$ $M_{4.8}$ नाभिजानंत; $G_1$ अभिजानंति; $M_6$ नाभिजग्मुस्ते. —For 3, Ś Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ $T_{3.4}$ subst.:

591* तस्मिंस्तमसि दुर्धर्षे मग्ना दैवतराक्षसाः ।
अन्योऽन्यं न प्रपश्यन्ति त्रीञ्जनान्प्राप्य केवलम् ।

[(l. 1) $Ñ_2$ $V_3$ $B_{3.4}$ दुष्पारे (for दुर्धर्षे). $D_{3.5}$ भग्ना (for मग्ना). —(l. 2) $D_{2.9}$ स्म; $D_5$ $T_3$ च (for न). $Ñ_2$ $V_1$ $B_{3.4}$ $D_5$ $T_4$ स्म; $V_3$ [अ]भि-; $D_{2.9}$ $T_3$ न (for प्र-). $V_3$ विक्रान्तान् (for त्रीञ्जनान्). Ś $D_{8.12}$ वर्ज्यं; $Ñ_1$ पश्य; $V_1$ प्रेक्ष्य; $T_4$ अथ (for प्राप्य). $Ñ_1$ $V_{1.3}$ केवलान्. $Ñ_2$ $B_{1.3.4}$ वर्जयित्वा जनत्रयं; $D_{2.5.9}$ केवलं तु जनास्त्रयः ($D_5$ °नत्रयं); $T_3$ त्रीन्बहूनपरे परान् (for the post. half).]

—Thereafter $T_3$ cont. 592*.

4 $D_{12}$ om. $4^{ab}$. —$^{ab}$) $D_{2.9}$ तु (for first च). $D_9$ $G_1$ $M_{1.6}$ transp. रावणश् and रावणिश्. $B_3$ महाबलं. —For $4^{ab}$, Ś Ñ $V_{1.3}$ $B_{1.4}$ $D_{1.3.4.8}$ $T_4$ subst.; while $T_3$ cont. after 591*:

592* शक्रं च रावणं चैव रावणिं च महाबलम् ।

[$Ñ_2$ $B_{1.4}$ $D_{1.3.4}$ इंद्रं (for शक्रं). $T_{3.4}$ transp. रावणं and रावणिं. $T_4$ सुमहाबलं.]

—Then $T_3$ further cont.; while $T_4$ subst. for $4^{cd}$:

593* सर्वं तमस्तदा चैव पश्यंति स्म दशाननः ।

[$T_4$ तद्धि तदा (for तदा चैव).]

—$^{c}$) $D_{6.10}$ -वृत्ते (for -वृते). $T_3$ तमसि संवृत्ते. $M_6$ तमोजालवृते तस्मिन्. —$^{d}$) $M_6$ जग्मुश्च (for ईयुर्न). —For $4^{cd}$, Ś $Ñ_1$ $V_1$ $D_{1-5.8.9.12}$ subst.:

594* सर्वं तद्धि च ते तत्र पश्यन्ति स्म स्वतेजसा ।

[$D_{1.4.5}$ तमस् (for तद्धि). $Ñ_1$ तमोभूतं; $D_{1.4}$ तत्र तद्दै; $D_{2.3.9}$ तमस्तत्र; $D_5$ तद्धि तमः (sic) (for च ते तत्र). $V_1$ तत्र सर्वं हि तमसा (for the prior half). $D_1$ प्रपश्यंति. $Ś_3$ $D_8$ सु- (for स्व-).];

while $Ñ_2$ $V_3$ $B_{1.3.4}$ subst. for $4^{cd}$:

595* सर्वं हि तत्तमोभूतं न किंचित्प्रत्यदृश्यत ।

[$V_3$ तत्र समाछन्नं (for हि तत्तमोभूतं).]

5 $^{b}$) $M_{2.8-10}$ क्षणात् (for रणे). Ś $Ñ_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ दैवतैर्विनिपातित($Ñ_1$ °पीडि)तं; $Ñ_2$ $B_{1.3.4}$ हतं दैवैर्दशाननः; $D_{6.7.10.11}$ रावणो निहतं क्षणात्; $T_2$ $G_3$ $M_6$ हतं रावणराक्षसः. —$^{c}$) Ś $Ñ_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ $G_1$ आहारयत् ($D_{1.3.4.9}$ °यंस्); $Ñ_2$ $B_{1.3.4}$ $D_{10.11}$ $T_{1.2}$ $G_3$ $M_6$ अभ्यगमत्; $D_{6.7}$ अभ्याहरत् (for अभ्यागमत्). $Ñ_2$ $B_{1.3.4}$ तूर्णं (for तीव्रं). —$^{d}$) $D_{10}$ चक्रिवान् (for मुक्तवान्). Ś $N_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ दशग्रीवो ननाद च.

6 $^{a}$) $D_6$ $T_{1.2}$ $G_{1.3}$ $M_3$ दुर्धर्षं. —$^{b}$) $D_{11}$ समरे स्वयं वाच ह (sic). —For $6^{ab}$, Ś Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ $T_4$ subst.:

596* स क्रोधात्सूतमाहेदं स्यन्दनं सूत वाहय ।

[$D_1$ om. स (subm.). $B_{1.4}$ स्म (for [इ]दं). $B_3$ आभाष्य (for आहेदं). $Ñ_2$ $B_{1.3.4}$ $D_1$ मम (for सूत). $D_3$ चाहय; $T_4$ चोदय (for वाहय).]

—$^{c}$) $Ñ_2$ $B_{1.3.4}$ सुर- (for पर-). $B_3$ मध्ये च (for मध्येन). —$^{d}$) $D_{10.11}$ Cg.k.t यावदंतो. Ś Ñ $V_{1.3}$ $D_{1-5.8.9.12}$ न यास्यहं (for नयस्व माम्). $T_4$ यावत्सेना निहन्म्यहं.

7 $^{a}$) $D_{6.7.10.11}$ $T_3$ $M_{2.8-10}$ [ए]व (for [ए]तांस्). Ś $D_{8.12}$ $T_3$ दैवतान् (for त्रिदशान्). Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.9}$ $T_4$ अद्यैता($Ñ_2$ $V_{1.3}$ $B_{1.3.4}$ °व) देवताः सर्वाः. —$^{b}$) $Ñ_2$ $B_{1.3.4}$ transp. विक्रमैः and समरे. Ś $Ñ_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ समरे विक्रमेण हि(Ś $D_{8.12}$ ह). —After $7^{ab}$, $D_9$ ins.:

597* विनिहत्याहं पश्चाच्च स्थापयिष्यामि चापरान् ।

—$^{c}$) $D_{6.7.10.11}$ $M_{2.8.10}$ नानाशस्त्र-. $D_6$ -समाहारैर्; $T_{1.2}$ $G_3$ $M_{3.5}$ महाघोरैर् (for महासारैर्). Ś $Ñ_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ शस्त्र(Ś $D_{3.8}$ °र)वर्ष($T_{3.4}$ अस्त्रशस्त्र)महावर्षैर्($Ñ_1$ $V_3$ °वेगैर्); $Ñ_2$ $B_{1.3.4}$ प्र($B_1$ आ)वर्षञ्शरजालानि. —$^{d}$) $M_6$ पातयामि (for नाशयामि). $D_6$ $T_{1.2}$ $G_{1.3}$ $M_{1-3.5.10}$ नभ-स्थलात्. Ś Ñ $V_{1.3}$ $B_{1.3.4}$ D (except $D_6$) $T_{3.4}$ नयामि यमसादनं.

8 $^{b}$) $D_{6.7.10.11}$ $T_{1-3}$ $M_3$ transp. वरुणं and धनदं. —$T_4$ damaged from मम् in यमम् up to वि in $9^{a}$. —$^{c}$)

विषादो न च कर्तव्यः शीघ्रं वाहय मे रथम् ।
द्विः खलु त्वां ब्रवीम्यद्य यावदन्तं नयस्व माम् ॥ ९
अयं स नन्दनोद्देशो यत्र वर्तामहे वयम् ।
नय मामद्य तत्र त्वमुदयो यत्र पर्वतः ॥ १०
तस्य तद्वचनं श्रुत्वा तुरगान्स मनोजवान् ।
आदिदेशाथ शत्रूणां मध्येनैव च सारथिः ॥ ११
तस्य तं निश्चयं ज्ञात्वा शक्रो देवेश्वरस्तदा ।
रथस्थः समरस्थांस्तान्देवान्वाक्यमथाब्रवीत् ॥ १२
सुराः शृणुत मद्वाक्यं यत्तावन्मम रोचते ।
जीवन्नेव दशग्रीवः साधु रक्षो निगृह्यताम् ॥ १३
एष ह्यतिबलः सैन्ये रथेन पवनौजसा ।
गमिष्यति प्रवृद्धोर्मिः समुद्र इव पर्वणि ॥ १४
न ह्येष हन्तुं शक्योऽद्य वरदानात्सुनिर्भयः ।
तद्ग्रहीष्यामहे रक्षो यत्ता भवत संयुगे ॥ १५

G. 7. 37. 14
B. 7. 29. 13
L. 7. 35. 16

---

$T_{1.2}$ $G_{1.3}$ $M_{1.3-5.7}$ विनिहत्याथ( $G_1$ $M_{3.4.7}$ °त्वा च; $M_5$ °त्याजौ ). —For 8, Ś Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ subst.; while $M_6$ subst. only l. 1 for $8^{ab}$; $T_3$ subst. only l. 2 for $8^{cd}$ :

598* अहमिन्द्रो भविष्यामि धनदो वरुणो यमः ।
देवता विनिहत्याहं स्थापयिष्यामि चापरान् ।

[ (l. 1) $Ñ_2$ $B_{1.3.4}$ $M_6$ transp. धनदो and वरुणो. —(l. 2) $D_5$ दैवतान्. Ś $D_{8.12}$ विनियम्य; $D_2$ वै निहत्य ( for विनिहत्य ). $Ñ_1$ $D_3$ [ आ ]जौ; $Ñ_2$ $B_{1.3.4}$ [ अ ]द्य ( for [अ]हं ). $T_3$ दैवतानि निहत्याजौ ( for the prior half ). $Ñ_2$ $B_{1.3.4}$ [ अ ]सुरान् ( for [ अ ]परान् ). ]

9 $T_4$ damaged up to वि in $^a$ ( cf. v.l. 8 ). —$^a$ ) $B_3$ विवादो ( for विषादो ). $Ñ_1$ नात्र; $D_{1.3.4}$ च न ( by transp. ) ; $D_{6.7.10.11}$ नैव ( for न च ). —$Ñ_2$ $B_{1.3.4}$ om. $9^{cd}$. —$^c$ ) $D_{5.6}$ $T_{1.2}$ $G_{1.3}$ $M_{3.10}$ त्रिः ( for द्विः ). $D_9$ विषण्णत्वात् ( for द्विः खलु त्वां ). Ś $D_{2.3.8.9.12}$ [ ए ]ष; $V_1$ [ ए ]तद्; $D_5$ [ ए ]षां; $G_1$ $M_6$ [ अ ]त्र ( for [ अ ]द्य ). $V_3$ मां च दृष्ट्वा द्रवत्येष; $D_{1.4}$ खलु त्वामब्रवीम्येष ( sic ). —$^d$ ) = $6^d$. Ś $Ñ_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_4$ न यास्यहं ( for नयस्व माम् ). ❀ Cg.k : यावदन्तो( Ck °न्तं ) नयस्व मामिति द्विर्द्विवारं त्वां ब्रवीमि खलु । तत्कथं न नयसीत्यर्थः( Ck °सीति शेषः ) । ; so also Ct. ❀

10 $^a$ ) Ś Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ $T_{3.4}$ $M_6$ हि; Cg.k as in text ( for स ). —$^b$ ) $B_1$ $D_{5.7.12}$ $G_1$ $M_2$ वर्तावहे; Cg.k वर्तामहे ( as in text ). $G_1$ स्वयं; Cg.k as in text ( for वयम् ). —$^c$ ) Ś $Ñ_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_4$ ( all with hiatus ) नयस्व मां सूतवर( $D_{3.5}$ °त तत्र ). —$^d$ ) $T_4$ damaged from यत्र up to $11^b$. $Ñ_1$ $D_{1-5.9}$ उदयः पर्वतो यतः ; $V_{1.3}$ उदयं पर्वतं पतिं ( $V_3$ पूर्वपर्वतं ).

11 $T_4$ damaged for $^{ab}$ ( cf. v.l. 10 ). —$^a$ ) $G_1$ तत्र ( for तस्य ). Ś Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ स सूत( $D_5$ तत )स्तद्वचः ( for तस्य तद्वचनं ). —$^b$ ) Ś $D_{8.12}$ सदश्वान् ( for तुरगान् ). $Ñ_1$ $D_{1.4}$ स्वान् ; $Ñ_2$ $V_3$ $B_{1.3.4}$ $D_{2.3}$ $M_6$ तान्; $V_1$ $D_9$ च; $D_6$ तु ( for स ). Ś $D_{8.12}$ $T_3$ वातरंहसः ; $D_5$ताननोदयत् ( for स मनोजवान् ). —$^c$ ) $V_3$ हि; $D_{2.5.9}$ [ ए ]व ( for [ अ ]थ ). —$^d$ ) $Ñ_1$ [ ए ]ष; $D_{1.4}$ [ ए ]वं ( for [ ए ]व ). Ś $Ñ_1$ $V_{1.3}$ $D_{1-4.8.9.12}$ $T_{3.4}$ $G_1$ $M_6$ स ( for च ). $Ñ_2$ $B_{1.3.4}$ मध्येनिमि( $B_4$ °ध्ये न मि )ष( $B_3$ देवस [ sic ] )तां रणे.

12 $^a$ ) $D_5$ ततस् ; $G_1$ तत्र ( for तस्य ). $D_5$ नियमं ( for निश्चयं ). Ś $Ñ_1$ $V_1$ $B_{3.4}$ $D_{1-4.8.9.12}$ मत्वा ( for ज्ञात्वा ). —$^b$ ) $M_8$ शत्रोर् ( for शक्रो ). Ś $D_{8.12}$ देववरस् ( for देवेश्वरस् ). $D_{2.5}$ $T_3$ तथा ( for तदा ). —$^c$ ) Ś $Ñ_2$ $V_{1.3}$ $B_4$ $D_{1.3-12}$ $T_3$ समरस्थास् ( $Ñ_2$ $D_{1.6.7.9-11}$ °स्थस् ) ( for समरस्थांस् ). Ś $D_{8.12}$ स; $Ñ_2$ $V_1$ $B_4$ $D_{1.3-5}$ $T_3$ ता ( for तान् ). $B_1$ समरत्रस्ता; $B_3$ समरे तस्थौ ( for समरस्थांस्तान् ). —$^d$ ) Ś Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ $T_3$ देवता इ( $Ñ_1$ $V_3$ $D_{2.9}$ °तानि )दम्.

13 $^a$ ) $D_{2.5.9}$ देवाः ( for सुराः ). $M_6$ शृण्वंतु. Ś Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ मे( $D_5$ भो ) सर्वे( $B_1$° र्वं ) ; $M_6$ मे वाक्यं ( for मद्वाक्यं ). —$^b$ ) $T_4$ damaged from मम up to ह्य in $14^a$. Ś $Ñ_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ यन्मह्यमिह; $Ñ_2$ $B_{1.3.4}$ मह्यं यदिह; $D_6$ यथा च मम ( for यत्तावन्मम ). —$^c$ ) Ś Ñ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_3$ रावणो जीवमानोयं. —For $13^{cd}$, $B_{1.3.4}$ subst. :

599* निगृह्यतां साधु जीवन्रावणो राक्षसाधिपः ।
[ $B_4$ रक्षसां पतिः ( for राक्षसाधिपः ). ]

14 $T_4$ damaged up to ह्य in $^a$ ( cf. v.l. 13 ). —$^a$ ) Ś $Ñ_1$ $V_1$ $D_{1-5.8.9.12}$ $T_{3.4}$ ह्य( $T_4$ * )तिरथः ; $D_6$ $M_6$ ह्यतिबलं. Ś $Ñ_2$ $B_{1.3.4}$ $D_{1-4.6.8.9.12}$ $M_6$ सैन्यं; $Ñ_1$ $V_{1.3}$ $T_{3.4}$ शीघ्रं; $G_1$ स्वैरं ( for सैन्ये ). —$^b$ ) $M_1$ रथौ * ( for रथेन ). $Ñ_1$ $V_3$ $T_3$ पवनो यथा; $Ñ_2$ च महौजसा; $V_1$ $B_{1.3.4}$ $D_7$ परमौजसा ( for पवनौजसा ). —$^c$ ) $Ñ_2$ $V_3$ $B_{1.3.4}$ आगमिष्यति; $M_{1.3}$ आगच्छति प्र- ; $M_{5.9}$ गमिष्यामि प्र- ( for गमिष्यति प्र- ). $D_{1-5}$ प्र( $D_5$ नि )वृत्तोर्मिः. —$^d$ ) Ś $Ñ_1$ $V_1$ $D_{1-4.8.9.12}$ $T_{3.4}$ पर्वसु ( for पर्वणि ).

15 $^a$ ) $Ñ_1$ $V_3$ $D_{1-5.9}$ $T_3$ चैष( $Ñ_1$ $V_3$ $D_{2.9}$ °व ) ; $B_1$ $M_9$ ह्येव ( for ह्येष ). $D_6$ $T_3$ $M_{8.9}$ शक्तो ( for शक्यो ). —$^b$ ) Ś $D_8$ स्वयंभुवः ( for सुनिर्भयः ). Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.9}$ $T_3$ वरदानेन( $B_1$ °नात्ति ) दर्पि( $D_{1.3.4}$ गर्वि )तः. —$D_5$ om. ( hapl. ? ) $15^c$ – 16. —$^c$ ) $T_{1.2}$ $G_3$ $M_{3.5}$ तं ( for तद् ). $M_3$ ग्रहिष्यामि वै; $M_7$ गमिष्यामहे. $G_1$ $M_{4.5}$ सर्वे ( for रक्षो ). —$^d$ ) Ś Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-4.8.9.12}$ $T_{3.4}$ $M_6$

